REPRINT FROM THE PANDIT.

# तार्किकरक्षा ।

## श्रीमदाचार्यवरदराजविरचिता ।

तत्कृतसारसङ्ग्रहाभिधव्याख्यासहिता ।

महोपाध्यायकोलाचलश्रीमल्लिनाथसूरिविरचितया
निष्कण्टकाख्यया व्याख्यया ज्ञानपूर्णनिर्मितया
लघुदीपिकाख्यया टीकया च समन्विता ।

वाराणसीस्थराजकीयप्रधानसंस्कृतपाठशालीयपुस्तका-
लयाध्यक्षेण पण्डितविन्ध्येश्वरीप्रसाद-
द्विवेदिना संस्कृता ।

वाराणस्याम्
मेडिकल्हाल्नामकयन्त्रालये
१९०३ ईसवीयवर्षे
मुद्रिता ।

॥ श्रीः ॥

ॐ नमः परमात्मने ।

# सटीकतार्किकरक्षा

## भूमिका ।

माधवाचार्याणां सर्वदर्शनसङ्ग्रहे[१] पूर्णप्रज्ञदर्शननिरूपणे[२]

---

(१) एशिआटिक्सोसाइटीसमादेशेन कलिकातानगरे मुद्रिते सर्वदर्शनसङ्ग्रहपुस्तके तन्मूलतया मुद्रिते पुस्तकान्तरे ऽपि समाप्तावेवं लिखितमस्ति । "इतः परं सर्वदर्शनशिरोमणिभूतं शाङ्करदर्शनमन्यत्र लिखितमित्यत्रोपेक्षितमिति ।" इदमेवावलम्ब्येदानीं विद्वांसः कल्पयन्ति यत् शाङ्करदर्शनं पञ्चदशीग्रन्थे तथा विवरणप्रमेयसङ्ग्रहग्रन्थे च माधवाचार्येण संन्यासाश्रमे नाम्ना विद्यारण्यस्वामिना लिखित तस्मात् सर्वदर्शनसंग्रहस्य पञ्चदशीग्रन्थेन विवरणप्रमेयसङ्ग्रहेण च सम्बन्ध इति । किं तु वाराणसीनिवासिश्रीयुक्तबाबूगोविन्ददासमहोदयानां निकटे वर्तमाने सर्वदर्शनसङ्ग्रहान्तिमभागे पातञ्जलदर्शननिरूपणानन्तरं शाङ्करदर्शननिरूपणस्य विद्यमानत्वादनुमीयते मुद्रितपुस्तकमूलभूतलिखितादर्शपुस्तकस्य परमादर्शपुस्तकस्य वा खण्डितत्वात् "इतः परं सर्वदर्शनशिरोमणिभूत"मित्यादिलेखो लेखकशोधककल्पितः, सर्वदर्शनसंग्रहलेखशैलीभिन्नशैलीकत्वात् पञ्चदशीविवरणप्रमेयसंग्रहसम्बन्धोऽप्यसङ्गत एवेति ।

केचित्तु तार्किकशिरोमणिरघुनाथकृतं सर्वदर्शनशिरोमणिग्रन्थं माधवाचार्यकृतसर्वदर्शनसङ्ग्रहस्य व्याख्यानमिति वर्णयन्ति । तदप्यदर्शनमूलकम् यत एलएल्· डी·, सी· आई· ई· उपाधिधारिणा राजेन्द्रलालमित्रेण नोटिसेस् आफ संस्कृतमेनुस्क्रिप्ट्सपुस्तके १८१७ संख्यायां तद्ग्रन्थस्य वर्णनं लिखितमिति । सोऽपि ग्रन्थो माधवाचार्यकृतसर्वदर्शनसंग्रहवदेव बोध्यः ।

(२) एशिआटिक्सोसाइटीमुद्रितपुस्तके ७० पृष्ठे ।

"तार्किकरक्षायां[1] च ।

धर्मस्य तदतद्रूपविकल्पानुपपत्तितः ।

धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् ॥"

इति लेखदर्शनात् कोऽसौ तार्किकरक्षाग्रन्थः केन चाचार्येण रचितो यो हि वेदभाष्यादेः प्रणेतृभिर्माधवाचार्यैः[2]रुद्धृत इति पर्यालोचयता मया चिरं तदन्वेषणे कृते भूतपूर्वैर्वाराणसीस्थैर्विद्वद्वरैः श्रीहरिकृष्णव्यासैः सम्पादितं तज्ज्येष्ठसूनुश्रीविद्याधरव्यासेन दत्तं वरदराजाचार्यकृततार्किकरक्षापुस्तकं[3] तत्कृततद्व्याख्यानसारसङ्ग्रहपुस्तकं[4]

(१) अत्र मुद्रितपुस्तके पृष्ठे ३०० ।

(२) सर्वदर्शनसङ्ग्रहारम्भे ।

"श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा ।

क्रियते माधवार्येण सर्वदर्शनसङ्ग्रहः ॥

पूर्वेषामतिदुस्तराणि सुतरामालोड्य शास्त्राण्यसौ

श्रीमत्सायणमाधवः प्रभुरुपन्यास्यत् सतां प्रीतये ॥" इत्यादि ।

सायणमाधवाचार्येणैव वेदभाष्यपराशरमाधवव्यवहारमाधवकालमाधवजैमिनीयन्यायमालाविस्तरादिग्रन्थाः प्रणीता इति नैव तिरोहितमस्ति विदुषाम् ।

(३) पुस्तकमिदं कागजाख्याधारे प्राचीनदेवनागराक्षरैः कुटिलेतिप्रसिद्धैर्लिखितं विशुद्धं मूलमात्रं सम्पूर्णम् ।

(४) इदमपि पूर्ववत् । अत्र लेखकेन लिपिकाल एवं लिखितः "संवत् ५७ श्रावणसुदि २" परन्तु संवत् १४५७ इति बोध्यः निरूप्यमाणलघुदीपिकापुस्तकान्ते लेखकेन लिपिकालस्य "संवत् १४५९ वर्षे वैशाख(सु)शु· २" एवंलिखितत्वात् तयोः कागजाख्याधारस्य लिपेश्चैकाकारत्वादेकलेखकलिखितत्वाच्च ।

ज्ञानपूर्णविरचितलघुदीपिकाख्यतट्टिप्पणपुस्तकं(१) च लब्धम् ।

तल्लब्ध्या जातोत्साहेन मया व्याख्यानान्तरान्वेषणे कृते एकस्य वृद्धस्यास्मत्सम्बन्धिनो गृहे ब्राह्मणसम्पादनीयत्वेन(२) स्थापितेषु वस्तुषु संख्यापूरकत्वेन निक्षिप्तेषु दुर्दशापन्नेषूत्तमेषु हस्तलिखितपुस्तकेषु हठादाकर्षितेषु भूयोभूयो निवार्यमाणेन मया कोलाचलमल्लिनाथसूरिकृतस्य निष्कण्टकाभिधस्य सारसङ्ग्रहानुगततार्किकरक्षाव्याख्यानस्य पुस्तकं प्रथमपरिच्छेदमात्रं(३) लब्धम् । तदनन्तरमस्यैव ग्रन्थस्य पुस्तकान्तरमपि वाराणस्यामेवैकस्य संन्यासिनो निकटे वर्तमानं कृमिभक्षितसर्वदेशं विशीर्णमन्ते खण्डितं च(४) लब्धम् । अनन्तरं वाराणसीस्थराजकीयाङ्गलपाठ-

---

(१) इदमपि सम्पूर्णं किन्त्वनेकस्थलेष्वलग्नपाठमशुद्धं च ।

(२) अध्ययनाध्यापनादिर्ब्राह्मणधर्मः स च पुस्तकेन विना न भवतीति पुस्तकं शालग्रामशिलासमीपे स्थाप्यं वा गङ्गायां प्रक्षेपणीयमिति तस्य वृद्धस्य सिद्धान्तः ।

(३) इदं पुस्तकं कागजाख्याधारे देवनागराक्षरैर्लिखितं जीर्णं त्रुटितपार्श्वभागं स्पर्शानर्हमशुद्धम् । अत्र यद्यपि लेखकेन लिपिकालो न लिखितस्तथापि जीर्णत्वाद्याकारेणानुमीयते यत् वर्षसार्द्धशतद्वयात् पूर्वं लिखितमिति ।

(४) अत्र रम्भपत्रस्य पूर्वपृष्ठे एवं लिखितमस्ति । "श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां वरदेऊजीयटीकानिष्कण्टकापुस्तकम् ॥" एवं हस्ताक्षरमुद्राचिह्नितान्यनेकानि पुस्तकानि वाराणस्यां क्वचिद्देशान्तरेष्वपि महापुस्तकालयेषु वर्तमानानि दृश्यन्ते । तस्मादनुमीयते यत् वाराणस्यां कोऽपि महान् पुस्तकालय उक्तमहात्मन आसीदिति ॥

शालाध्यापकेन पण्डितगणेशदत्तत्रिपाठिना प्रदत्तं सारसङ्ग्रहसहितं तार्किकरक्षापुस्तकं प्रथमपरिच्छेदमात्र(१)मन्यच्च पण्डितवरगौरीनाथशास्त्रिणा समर्पितं तदपि प्रथमपरिच्छेदमात्रं(२) प्राप्तम् ।

एतेषां पुस्तकानां प्राप्त्यातीवमुदितचित्तोहममुं निबन्धोत्तमं सटीकं मुद्रणद्वारा प्रकाशयितुं समुत्सुको वाराणसीस्थराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षाणां प्रभुवराणां श्रीमताम् आर्थरवेनिससाहबमहाशयानां निदेशं समधिगम्य पूर्वं विजयनगरसंस्कृतसीरीज्नामकपुस्तकावल्यां मुद्रयितुं प्रवृत्तः किं तु तस्या विश्रान्तत्वात् काशीविद्यासुधानिधिनामके मासिकपत्त्र इदानीं मुद्रितवान् । मुद्रणारम्भश्च येन प्रकारेण जातः स चोक्तमहाशयैरेव पुस्तकारम्भे ऽङ्गलभाषया सङ्क्षेपतः प्रकाशितः ।

पूर्वोक्तेषु पुस्तकेष्वसन्निकटे वर्तमानेष्वपि संशोधनस्य सम्यक्त्वसम्पादनेच्छया मया श्रीयुक्तरामकृष्णगोपालभाण्डारकर एम्. ए. पीएच्. डी., महाशयसम्पादितं निष्कण्टकापुस्तकं पुण्यग्राम(पूना)स्थडेकन्कालेज्पुस्तकालयस्थमुक्तमहाशयैः कृपया प्रदत्तं समानायितम् । तेन खण्डितेनाशुद्धेनापि परमादर्शस्थैः कतिपयगुणैर्युक्तत्वादुपयोगः सम्पादितः ।

(१) अत्र लेखकेन लिपिकाल एवं लिखितः । संवत् १६६१ वर्षे । आश्विनवदि १४ चतुर्दश्यां लिखितमदः पुस्तकं छप्याभट्टात्मजेन माधवभट्टेन वशिष्ठगोत्रिणा स्वपाठार्थं परपाठार्थं च ।

(२) अत्र यद्यपि लेखकेन लिपिकालो न लिखितस्तथापि जीर्णत्वाद्याकारेणानुमीयते वर्षशतद्वयात् पूर्वं लिखितमिदं प्रायः शुद्धम् ।

अत्र वाराणसीस्थराजकीयसंस्कृतपाठशालीयन्यायाध्यापकेन तर्कतीर्थोपाधिधारिणा श्रीसुरेन्द्रलालगोस्वामिना प्रूफ्पत्रसमालोचनया उपकृतोऽस्मि ।

एतावतापीदं मुद्रितं पुस्तकं विशुद्धं जातमिति वक्तुमशक्यं किं त्वस्मिन् कार्ये ऽननुभूतपूर्वजातीयो महानाऽऽयासः कृतो मयेति ।

प्रथमपरिच्छेदस्य ज्ञानपूर्णकृता लघुदीपिकाटीका त्वन्ते मुद्रिता भविष्यतीत्यादर्शपुस्तकस्यापाततो दर्शनेन पूर्वं प्रतिज्ञातम् । किं तु पश्चात् सम्यक्समालोचनेनादर्शपुस्तकस्यात्यन्ताशुद्धत्वं छिन्नस्थलेषु ग्रन्थत्रुटिं चावगम्येदानीं तन्मुद्रणं साहसं मन्यमानेन मयोपेक्षितमित्यादर्शान्तरदानेनानुग्राह्योऽहमुत्साहवर्धकैर्देशोपकारपरैः पुस्तकान्वेषकैः पुस्तकोद्धारकैर्विद्वद्वरैर्यतो द्वितीयसंस्करणे तत्सम्पन्नं भवेदिति ।

दुर्लभेन पुरातनेन न्यायदर्शनानुरागिजनानन्दवर्धकेनामुना निबन्धेन मनस्तावद् विनोदयन्तो विद्वद्वरा मामकीनं परिश्रममिदानीं सफलयन्तु इति जगदीश्वरं प्रार्थय इति ॥

---

सटीकतार्किकरक्षायाः प्रणेता आचार्यवरदराजश्च(१) कस्मिन् देशे कस्मिन् काले आसीदितीदानींपर्यन्तं

---

(१) अपरोऽपि वरदराजो वैयाकरणसिद्धान्तकौमुदीप्रणेतॄणां भट्टोजिदीक्षितानां शिष्य आसीत् । अनेन सारसिद्धान्तकौमुदी लघुसिद्धान्तकौमुदी मध्यसिद्धान्तकौमुदी च रचिता । यथाह मध्यसिद्धान्तकौमुद्याम् ।

"नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान् ।
करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम् ॥"

सारसिद्धान्तकौमुदीपुष्पिकायां "श्रीचटविटिकगिटवरदराजभट्ट-विरचिता सारसिद्धान्तकौमुदी समाप्ता" अत्र चटविटिकगटीत्युक्त्या तैलङ्गोऽयमित्यनुमीयते। अयं च भट्टोजिदीक्षितानां समय एवासीत्। भट्टोजिदीक्षितसमयश्च १६७६–१७१६ संवत्सरात्मकः यतस्तस्मिन्नेव काले वाराणस्यामेव निवसता जगन्नाथपण्डितराजेन सम्राट्जगन्नाथापरनामधेयेन* भट्टोजिदीक्षितकृतप्रौढमनोरमाग्रन्थस्य कुचमर्दननामकः खण्डनग्रन्थः कृतः तत्पुस्तकं च काव्यप्रकाशटीकाकारस्य भट्टवामनाचार्यस्य निकटे वर्तत इति मुम्बईनगरे द्वितीयावृत्तिमुद्रिते काव्यप्रकाशपुस्तके भूमिकायां २४ पृष्ठे लिखितम्। अत एव भट्टोजिदीक्षितेन स्वपाण्डित्यप्रख्यापनाय मनोरमाग्रन्थो जगन्नाथपण्डितराजस्य समीपे प्रेषित इति किंवदन्ती सङ्गच्छत इति॥

अपि च नागेशभट्टेन महाभाष्यप्रदीपोद्द्योतारम्भे "हरिदीक्षितपादाब्जसेवनाल्लब्धसन्मति"रिति वैयाकरणमञ्जूषायामपि "अधीत्य फणिभाष्याब्धिं सुधीन्द्रहरिदीक्षितादि"त्युक्तं तस्मात् नागेशभट्टो हरिदीक्षितशिष्यः। लघुशब्दरत्ने "भट्टोजिदीक्षितपौत्रहरिदीक्षितविरचिते लघुशब्दरत्ने" इति लेखदर्शनात् हरिदीक्षितो भट्टोजिदीक्षितानां पौत्रः तत्समानकालिको नागेशभट्टस्तेन च वैयाकरणबृहन्मञ्जूषाग्रन्थो रचितस्तत्पुस्तकं च १७६३ संवत्सरलिखितमस्मन्निकटे वर्तते। तस्मिन् अनेकानि क्रोडपत्राणि वर्तन्ते ऽनेकस्थलेषु एकः पाठः पूर्वं लिखितो ऽनन्तरं कुण्डलनां कृत्वा तदर्थबोधकैः शब्दान्तरैरेव लाघवेन स एव पाठो लिखित

* वाराणसेयराजकीयसंस्कृतपाठशालीयपुस्तकालये सम्राट्जगन्नाथकृतरेखागणितपुस्तकमस्ति तच्च पुस्तकं ग्रन्थकर्तुराज्ञया लिखितं तथाहि।

युगवसुनगभूवर्षे १७८४ शुचिशुक्ले युगतिथौ रवेर्वारे।
व्यलिखल्लोकमणिः किल सम्राजामाज्ञया पुस्तम्॥

विंशतिवर्षासन्नवयस्केन जगन्नाथेन महत्पाण्डित्यं सम्पादितमिति गणकतरङ्गिण्यां निरूपितं महामहोपाध्यायसुधाकरद्विवेदिभिः।

महामहोपाध्यायदुर्गाप्रसादस्तु काव्यमालामुद्रितरसगङ्गाधरभूमिकायां २ पृष्ठे १६२८–१६६६ खृस्ताब्दे शाहजहाभिधयवनसार्वभौमसमये जगन्नाथसमाजो भिवस्य जगन्नाथपण्डितराजस्य स्थितिं निरूपयति। अनेनैव कुचमर्दननामकं खण्डनं कृतमिति।

सम्यङ्निश्चयो न भवति किं तु ग्रन्थान्ते

"आलोक्य दुस्तरगभीरतरान् निबन्धान्
वाचस्पतेरुदयनस्य तथापरेषाम् ।
सारो मयात्र समगृह्यत वावदूकै-
र्नित्यं कथासु विजिगीषुभिरेष धार्यः ॥"(१)

इत्युक्तत्वादुदयनाचार्यकृतात्मतत्त्वविवेकन्यायकुसुमाञ्जलिप्रबोधसिद्धि(२)ग्रन्थानामनेकत्रोद्धृतत्वात् उदय-

एवं पद्याङ्का अपि भिन्नक्रमा वर्तन्ते तस्मात् तत्पुस्तकं नागेशभट्टपरिशोधितमुपबृंहितं चेत्यनुमीयते । एतेनापि १६७६–१७१६ संवत्सरकाले भट्टोजिदीक्षितानां स्थितिरासीदिति सुवचम् ।

अपरं च वाराणसीस्थराजकीयाङ्ग्लपाठालयाध्यापकपण्डितगणेशदत्तत्रिपाठिनो निकटे वर्तमाने सिद्धान्तकौमुदीपुस्तके लेखकलिखितेन लिपिकालेन संवत् १७३८ एतद्दात्मकेन पूर्वोक्ता स्थितिरविरुद्धैव ।

सामवेदीयकल्पसूत्रव्याख्याकारो वरदराजो भिन्नः । यथाह "इति वामनाचार्यसूनुः कौशिकान्वयसम्भवो वरदराजः कल्पसंवत्सरकल्प(?)-व्याख्यां चक्रे' पाठोऽयं वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तके ८३ पत्रे वर्तते ।

अन्योऽपि वरदराजो येन मीमांसाशास्त्रे नयविवेकटीकाख्यो महानिबन्धो रचितो यथाह "आत्रेयस्य श्रीसुदर्शनाचार्यस्य शिष्यस्य श्रीरङ्गनाथसूनोर्वरदराजस्य कृतौ नयविवेकटीकाया"मित्यादि । इदं पुस्तकं वर्षचतुःशत्याः पूर्वं लिखितमिवाभाति वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालये खण्डितं भग्नं तृतीयाध्यायमात्रं वर्तते ॥

(१) अस्मिन् मुद्रितपुस्तके ३६४ पृष्ठे ।

(२) आत्मतत्त्वविवेकः १७९ । १८९ । १९४ । २०३ । पृष्ठेषु । न्यायकुसुमाञ्जलिः १०७ पृष्ठे । प्रबोधसिद्धिः १८९ । ३०८ । ३५७ । पृष्ठेषु ।

नाचार्येण लक्षणावलीग्रन्थस्य ९०६ शाकवर्षे (१०४१ संवत्सरे) प्रणयनात्[1] ज्ञानपूर्णकृततार्किकरक्षाटिप्पणलघुदीपिकापुस्तकस्य १४५९ संवत्सरलिखितस्यास्मन्निकटे वर्तमानत्वात् १४५९ संवत्सरात् पूर्वं १०४१ संवत्सरतश्च पश्चात् तार्किकरक्षाकर्तृवरदराजस्य स्थितिरासीदित्यत्र नास्ति वादावकाशः ।

विशेषजिज्ञासायां तु ज्ञानपूर्णेन लघुदीपिकासमाप्तौ "विष्णुस्वामिगुरुं नुमः" इत्युक्तत्वात् विष्णुस्वामिनः शिष्य इति कथितं भवति । यज्ञेश्वरभट्टेन आर्यविद्यासुधाकरे २३१ पृष्ठे "ततः शङ्करमतानुयायिना यादवनाम्ना[2] मातुलेनाध्यापितोऽयं रामानुजोऽभिनववैष्णवसम्प्रदायप्रवर्तको बभूव । अयमाचार्यो विष्णुस्वामिशिष्यसन्ताने गृहीतजन्मनो बिल्वमङ्गलस्य[3] पश्चादि"त्यादि लिखितम् । प्रपन्नामृतनामधेये रामानुजचरिते तु १०१२ शाकवर्षे ( ११४७ संवत्सरे ) यादवाद्रिपर्वते नारायणप्रतिमा स्थापिता रामानुजाचार्येणेति प्रतिपादितम्[4] । अपि

---

(१) बनारससंस्कृतसीरीजमुद्रिते ऽस्मच्छोधिते प्रशस्तपादभाष्यपुस्तके २ खण्डे ऽन्ते ।

तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥

(२) यो हि यादवप्रकाश इति पूर्णनाम्ना प्रसिद्धः ।

(३) बिल्वमङ्गलस्य लीलाशुक इति नामान्तरम् । अनेन श्रीकृष्णकर्णामृतं काव्यं रचितम् ।

(४) प्रपन्नामृते ४४–४८ अध्यायेषु । अथ भक्तनगरे सार्द्धं शिष्यसङ्घेन निवसतस्तस्य स्वप्नदर्शनानन्तरं भगवन्मूर्त्युद्धरणार्थं यादवाद्रिग-

च आर्यविद्यासुधाकरे २२८ पृष्ठे विष्णुस्वामिन इतिहासनिरूपणप्रसङ्गे इदमपि लिखितम् "अयं च शङ्कराचार्यादर्वाचीनः ।" "यतोऽनेनाद्वितीयनिराकारब्रह्मप्रतिपादकं शङ्करसम्मतवेदान्तसिद्धान्तं प्रतिक्षिप्य साकारब्रह्मप्रतिपादकं स्वमतं प्रवर्तितमिति माधवीयसर्वदर्शनसंग्रहाभिधग्रन्थाल्लभ्यते ।"

नीलकण्ठभट्टकृतशङ्करमन्दारसौरभे तु
"प्रासूत तिष्यशरदामतियातवत्या-
मेकादशाधिकशतोनचतुःसहस्याम् ।"

इत्युक्त्या ३८८९ कलिवर्षे ८४५ वैक्रमसंवत्सरे शाङ्कराचार्याविर्भावः सिद्ध्यति [१] । एतेन ८४५ संवत्सरस्य च पश्चात् ११४७ संवत्सरात् पूर्वं विष्णुस्वामिनः स्थितिरिति [२] सिद्धम् । अपरं च लक्षणावलीग्रन्थात् १०४१ संव-

मनकथनम् १०१२ शकाब्दे चैत्रशुक्लचतुर्दश्यां रामानुजाचार्यस्तत्र नारायणप्रतिमां प्रतिष्ठापितवानित्यादि सर्वं निरूपितम् ।

(१) प्रस्थानत्रयभाष्यकर्तुः शिवावतारस्य श्रीशङ्कराचार्यस्याविर्भावजीवनचरितादिविषये बहवो विकल्पा इदानीं दृश्यन्ते ते च परीक्षापूर्वकं न्यायवार्त्तिकभूमिकायां निरूपयिष्यन्तेऽस्माभिरास्तां तावत् ।

(२) यज्ञेश्वरभट्टेन आर्यविद्यासुधाकरे पृष्ठे २३४ "विक्रमसंवत्सरकालस्य त्रयोदशे शतके मध्वाचार्यः समभवत् । गुर्जराधिपतेः कुमारपालाभिधस्य राज्ञो राज्यसमये सम्प्रदायप्रदीपकृता मध्वाचार्यस्य समुद्भववर्णनात् । विक्रमार्कसमयात् प्रगतेषु ११९९ नवनवत्यधिकैकादशशतीमितेषु संवत्सरेषु कार्त्तिकशुक्लदशम्यां कुमारपालस्य राज्याभिषेको बभूवेति प्रबन्धचिन्तामणिग्रन्थे मेरुतुङ्गाचार्येण लिखितत्वाच्च ।" इति लिखितम् ।

भविष्यपुराणपरिशिष्टे भगवद्भक्तमाहात्म्ये २१ अध्याये तु

"विष्णुस्वामी प्रथमतो निम्बादित्यो द्वितीयकः ।
मध्वाचार्यस्तृतीयस्तु तुर्यो रामानुजः स्मृतः ॥"

इति लिखितत्वात् रङ्गरामानुजात् पूर्वं विक्रमवर्षाणां त्रयोदशशतके मध्वाचार्यस्तस्मादपि पूर्वं निम्बादित्यस्तस्मात् पूर्वं विष्णुस्वामीति क्रमोऽपि १०४१ संवत्सरात्परं ११४० संवत्सरात् पूर्वं विष्णुस्वामिनः स्थितिं न विरोधयति। तुर्यो रामानुजः स्मृत इति भविष्यपुराणपरिशिष्टं तु उपनिषद्भाष्यकाररङ्गरामानुजपरं बोध्यमन्यथा तस्मिन्नेव पुराणे सम्प्रदायप्रवर्तकरामानुजस्यापि वर्णनीयत्वादुन्मत्तप्रलापापत्तेरिति* ।

मध्वाचार्याणामितिहासस्तु विस्तरतो महाभारतीयभविष्यत्पर्वणि निरूपितः । यद्यपि शङ्कराचार्याणामितिहासो माधवीयशङ्करविजयादौ प्रसङ्गादन्येषामाचार्याणामपि तत्रैव, रामानुजाचार्याणां प्रपन्नामृते वल्लभाचार्याणां वल्लभदिग्विजये निरूपित एव तथापि न पर्याप्तः किं तु महाभारतस्य पूरको हरिवंशो वर्तत एव तदनन्तरमपि भविष्यत्पर्वं वर्तते, एवं भविष्यपुराणपूरकं भविष्योत्तरपुराणं तस्यापि पूरकं भविष्यपुराणपरिशिष्टं वर्तत इति चित्रम् ॥

---

* वाराणसीस्थराजकीयसंस्कृतपाठशालाध्यापकपण्डितभागवताचार्यास्तु तुर्यो रामानुजः स्मृत इत्यस्याभिप्रायं वक्ष्यमाणरीत्या निरूपयन्ति ।

द्वापरान्ते कलेरादौ प्रोक्तः सङ्कर्षणेन य इति महाभारतादिप्रोक्तविधया ऽवतीर्णोऽनन्तमूर्तिर्भगवान् रामानुजमुनिरार्यब्रह्ममीमांसासिद्धान्तप्रत्यवस्थानेन श्रीशङ्कराचार्येण सूत्राभिप्रायसंवृत्या स्वाभिप्रायप्रकाशनादिति तत्सयूथ्यभास्कराचार्याद्युक्तरीत्या युक्त्यवष्टम्भेन ब्रह्मसूत्राणि बोधायनसिद्धान्तपराकरणमुद्रया व्याचक्षाणेनोपनिबद्धान्प्रतिबिम्बवादावच्छेदवादाभासवादप्रमुखानर्थान् कार्त्स्न्येन निरस्य भगवद्बोधायनकृतां ब्रह्मसूत्रवृत्तिमित्यादिप्रतिज्ञानुसारं तं प्रतिष्ठापयितुकामो व्याचकारेति तुर्यो रामानुज इति न क्रमाभिप्रायं तुर्यत्वमपि तु विष्णुस्वामिप्रभृतिभिरपराकृततत्तदर्थजातपराकर्तृतया सिद्धान्तप्रतिष्ठापनपर्याप्त्यभिप्रायम् । यथान्यदीयग्रन्थकारा अपि रामानुजः शिष्टगुणाग्रगण्यो निनिन्द बिम्बप्रतिबिम्बवादमित्यादि स्वस्वग्रन्थेष्वधिकमपेक्षमाणैः श्रीभाष्यमालोकनीयमिति तात्पर्येण सनिर्भरमाहुः । रङ्गरामानुजाचार्यास्तु संप्रदायधूर्वहपुरुषत्वाभावेन न व्यपदेशमर्हन्ति । तुर्यो नाम संन्यस्तवानिति आश्रमानुसार्यपि क्रमस्सर्वांशे न प्रमाणसिद्ध इति ।

त्सरे उदयनाचार्याणां स्थितिरासीदित्यप्युक्तम् । तस्मात् "वाचस्पतेरुदयनस्य तथापरेषा"मिति वदतस्तार्किकरक्षा-कर्तुरुदयनाचार्यसमयपश्चाद्भाविनो वरदराजाचार्यस्य तथा अस्मात् किञ्चित्पश्चाद्भाविन एतत्समानकालिकस्य वा तार्किकरक्षाटीकालघुदीपिकाकर्तुर्विष्णुस्वामिशिष्यस्य ज्ञानपूर्णस्य च १०४१ संवत्सरादनन्तरं ११४७ संवत्सरात् पूर्वं स्थितिरासीदित्यनुमीयते ॥

वरदराजाचार्येण "आलोक्य दुस्तरगभीरतरान् निबन्धान्" इत्याद्युक्तत्वात् तार्किकरक्षाग्रन्थसमालोचनात् मल्लिनाथेन चोपोद्घाते "इह खलु तत्रभवान् बालानुकम्पी वरदराजः सकलन्यायशास्त्ररहस्योपदिदिक्षया स्वविरचिततार्किकरक्षाश्लोकव्याख्यानाय सारसङ्ग्रहं नाम प्रकरणमारभमाण" इत्याद्युक्तत्वात् सिद्धं भवति यत् सूत्राणामतिसंक्षिप्तत्वात् भाष्यवार्त्तिकादिग्रन्थानां विस्तृतत्वाद्दुरूहत्वाच्च न्यायसिद्धान्तसिद्धान् प्रमाणादिपदार्थान् प्रथमतः श्लोकात्मकेन ग्रन्थेन निबबन्ध पश्चात् तस्याप्यस्फुटार्थत्वं विचार्य सारसंग्रहटीकाग्रन्थेन व्याख्यातवान्।

केचित्तु तार्किकरक्षाग्रन्थं तर्ककारिकानाम्ना व्यवहृतवन्तोऽदः पुरातनं न्यायप्रकरणं वरदराजाचार्येण स्वकृतया सारङ्ग्रहाभिधटीकया विशदीकृतमिति वदन्ति । तन्मन्दम् ज्ञानपूर्णेन लघुदीपिकायाम्

> "पुरा वरदराजेन न्यायशास्त्रार्थसंग्रहः ।
> कृतः परत्वतो बुद्ध्वा (?) पद्यानां दुर्ग्रहार्थताम् ॥
> तेनैव रचिता व्याख्या सा च शास्त्रपदं गता ।
> ततस्तदर्थसिद्ध्यर्थं करोमि लघुदीपिकाम् ॥"

इत्याद्युक्तत्वात् ।

ग्रन्थोऽयमतीवोपयुक्तो यतो विस्तृततुरूहशङ्का-समाधिवाग्जालाकाण्डताण्डवादिराहित्येन सरलरीत्या न्यायसूत्रभाष्यादिप्रतिपादिताः प्रसङ्गात् कणादसूत्रप्रशस्तपादभाष्यप्रतिपादिता अपि सर्वे प्रमाणादयः पदार्था द्रव्यादयश्च पदार्था अत्र परिच्छेदत्रये निरूपिताः। तत्र प्रथमपरिच्छेदे प्रमाणादयश्छलान्ताः पदार्था निरूपिताः। द्वितीयपरिच्छेदे जातिपदार्थो निरूपितः। तृतीये निग्रहस्थानपदार्थ इति। अन्यत्या विशेषविषयास्तु मुद्रितात् पदार्थनिरूपणक्रमसूचीपत्त्रादवगन्तव्या इति।

वरदराजाचार्येण न्यायकुसुमाञ्जलिटीकापि रचिता मल्लिनाथेन तार्किकरक्षाटीकायां ४६ पृष्ठे उक्तत्वादिति।

---

सटीकतार्किकरक्षाटिप्पणलघुदीपिकाकारस्य ज्ञानपूर्णस्य समयस्तु यथोपलब्धं निरूपितप्राय एव प्राक्। इदानीं निष्कण्टकाकर्तुः कोलाचलमल्लिनाथसूरेर्जीवनचरितविषयो यथोपलब्धि निरूप्यते।

तत्र तावदनेके मल्लिनाथनामानो विद्वांसो बभूवुः। तथाहि भोजप्रबन्धे(१)।

"अन्यदा राजा क्रीडोद्याने रममाणः श्रान्तः चिरेण सहकारतरोरधस्तात् तस्थौ। ततस्तत्र सहकारतरुमूले

(१) वाराणसीस्थराजकीयसंस्कृतपाठशालीयलिखितपुस्तके १७२ संख्यके १२५ पत्रे लेखोऽयं वर्तते। अस्मिन् पुस्तके लेखकेन लिपिकाल एवं लिखितः॥ "श्रीसंवत् १८५४ आषाढसुदि पूर्णमासी वार शनि लिखितं भोजप्रबन्ध धनीराम ब्राह्मण।"

पण्डितजीवानन्दविद्यासागरेण कलिकातानगरे प्रकाशिते पुस्तके ऽपि ६७ पृष्ठे पाठोऽयं वर्तत इति।

रत्नकम्बलमध्यासीनं भूपालं वीक्ष्य कोऽपि मल्लिनाथकविरागत्य स्वस्तीत्युक्त्वा प्राह ।

शाखाशतचितवियतः
सन्ति कियन्तो न कानने तरवः ।
परिमलभरमिलदलिकुल-
दलितदलाः शाखिनो विरलाः ॥ १० ॥

ततो राजा श्रुत्वा तुष्टः पाणिवलयं ददौ । ततः कोशाधिकारी कवये पाणिवलयं दत्तं ज्ञात्वा धर्मपत्रे लिखति स्म ।

सहकारतरोर्मूले वर्णिते शाखिनां कुले ।
मल्लिनाथाय धारेन्द्रः स्वपाणिवलयं ददौ ॥" इति ।

भोजप्रबन्धग्रन्थश्च मिथिलादिदेशाधिपतिमहाराजलक्ष्मणसेनपुत्रेण बल्लालसेनेन(१) भोजराजीयधर्मपत्र(२)सङ्ग्रहमवलम्ब्य रचितः । बल्लालसेनसमयश्च तत्कृताद्भुतसागरग्रन्थस्य "भुजवसुदशमितशाके १०८२ श्रीमद्बल्लालसेनराज्यादौ" इत्यादिलेखदर्शनात् १२१७ संवत्सरः, अस्मात् पूर्वं १०७९ संवत्सरासन्ने धाराधिपभोज-

(१) इतिहाससंशोधकास्तु बल्लालसेनस्य पुत्रो लक्ष्मणसेन इति निरूपयन्ति । तच्च सद्वृत्ते ऽद्भुतसागरे "लक्ष्मणसेनात्मजबल्लालसेनविरचिते ऽद्भुतसागरे" इति लेखस्य वर्तमानत्वात् । अपि च मिथिलादेशप्रचलितेन ल० सं० इत्याकारकेण लक्ष्मणसेनसंवत्सरेण १०३० शकाब्दे लक्ष्मणसेनराज्यकालस्य सर्वजनसुप्रसिद्धत्वात् । विस्तरस्तु न्यायवार्त्तिकभूमिकायामनुसन्धेयः ।

(२) विक्रमादित्यस्यापि धर्मपत्रसंग्रह आसीदिति तत्रैव सूचितम् ।

राजसमये[१] मल्लिनाथकविरासीदित्येको मल्लिनाथकविः । केचित्तु

"मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया ।
व्याचष्टे कालीदासीयं काव्यत्रयमनाकुलम् ॥"

इति रघुवंशटीकास्थश्लोकदर्शनात् कविशब्दसाम्याद् भोजराजकालिक एव रघुवंशादिकाव्यटीकाकारो मल्लिनाथ इत्याहुः । तन्मन्दम् रघुवंशादिटीकासूद्धृतानां ग्रन्थानां नवीनत्वात् । तच्चाग्रे निरूपयिष्यामः ।

अथापरोऽपि मल्लिनाथ आसीत् तथाहि सरस्वतीतीर्थकृतायां काव्यप्रकाशटीकायाम्[२] ।

"विधातुकामः सुकृतं गरीयः
क्षमातलं स्वर्ग इवावतीर्णः ।

---

(१) भोजराजसमयस्तु ९६४ शककाल इति महामहोपाध्यायसुधाकरद्विवेदिना गणकतरङ्गिण्यां ३१ पृष्ठे लिखितम् । भट्टवामनाचार्यकृतटीकासहिते मुम्बईनगरे द्वितीयावृत्तिमुद्रिते काव्यप्रकाशपुस्तके भूमिकायां ५ पृष्ठे "भोजराजस्य स्थितिकालस्तु खलु ९९६ वत्सरादारभ्य १०५१ वत्सरपर्यन्तः" "१०२२ मिते खृस्तवत्सरे भट्टगोविन्दसुताय धनपतिभट्टाय ब्राह्मणाय दत्तं दानपत्रमपि भोजराजस्य पूर्वोक्तमेव स्थितिकालं स्पष्टं कथयति । तच्च दानपत्रं महामहोपाध्यायदुर्गाप्रसादेन प्राचीनलेखमालायामङ्कयित्वा प्रसिद्धिं प्रापितमिति ।" तच्च दानपत्रं धाराधिपभोजराजस्यैवेति तद्दर्शनादेव व्यक्तं भवतीति ॥

(२) भट्टवामनाचार्यकृतटीकासहिते मुम्बईनगरे द्वितीयावृत्तिमुद्रिते काव्यप्रकाशपुस्तके भूमिकायां २८ पृष्ठे लेखोऽयं वर्तते । नायं मल्लिनाथो रघुवंशादिकाव्यटीकाकार इत्यपि निरूपितं तत्रैव भट्टवामनाचार्यैः ।

आलम्बनं सर्वविशेषणानां
जयत्यखण्डस्थितिरान्ध्रदेशः(१) ॥ ५ ॥
फलमिव सुकृतानां लोकधात्र्याः समग्रं
विगलितमिव भूमौ नाकलोकस्य खण्डम् ।
नगरमतिगरीयः सर्वसंसारसारः
त्रिभुवनगिरिनाम्ना तत्र विख्यातमास्ते ॥ ६ ॥
तत्राभवत् सकलशास्त्रविचारपात्रं
श्रीवत्सगोत्रसुरकाननपारिजातः ।
अन्यद्विधातु(?)रवलम्बनमाप्तवाचां
रामेश्वरः कलिकलङ्ककथान्तरायः ॥ ७ ॥
आसीत् प्रमाणपदवाक्यविचारशीलः
साहित्यसूक्तिबिसिनीकलराजहंसः ।
ब्रह्मामृतग्रहणनादितलोभवृत्तिः
तस्यात्मजो निपुणधीर्नरसिंहभट्टः ॥ ८ ॥
तस्मादचिन्त्यमहिमा महनीयकीर्तिः
श्रीमल्लिनाथ इति मान्यगुणो बभूव ।
यः सोमयागविधिना कलिखण्डनाभि-
रद्वैतसिद्धमिव सत्ययुगं चकार ॥ ९ ॥
लक्ष्मीरिव मुरारातेः पुरारातेरिवाम्बिका ।
तस्य धर्मवधूरासीन्नागम्मेति गुणोज्ज्वला ॥ १० ॥
ज्येष्ठस्तदीयतनयो विनयोदितश्री-
र्नारायणोऽभवदशेषनरेन्द्रमान्यः ।
वाग्देवताकमलयोरपि यस्य गात्रे
सीमाविवादकलहो न कदापि शान्तः ॥ ११ ॥

(१) आन्ध्रदेशः तैलङ्गदेशः ।

विरिञ्चेः पर्यायो भुवि सदवतारः फणिपते-
स्त्रिदोषो दोषाणां सकलगुणमाणिक्यजलधिः ।
अवाचां प्राचां वा सकलविदुषां मौलिकुसुमं
कनीयांस्तत्सूनुर्जयति नयशाली नरहरिः ॥ १२॥

सवसुग्रहहस्तेन ब्रह्मणा १२९८ समलङ्कृते ।
काले[1] नरहरेर्जन्म कस्य नासीन्मनोरमम् ॥ १३ ॥"

एतेन आन्ध्रदेशे त्रिभुवनगिरिनाम्नि नगरे वत्सगोत्रे १२९८ विक्रमसंवत्सरे नरहरिनामा विद्वद्वरः समजनि तस्य पिता मल्लिनाथ आसीदिति निष्पन्नम् ।

केचित्तु अयमेव मल्लिनाथो नैषधचरितं विहाय रघुवंशादिपञ्चकाव्यटीकां चकार मल्लिनाथपुत्राभ्यां नारायणनरहरिभ्यां नैषधचरितटीके चक्राते इति वदन्ति । तन्न यतः १२९८ संवत्सरादपि पूर्वकालवर्ती मल्लिनाथो रघुवंशादिकाव्यटीकासु अर्वाचीनान् निबन्धान् कथमुद्धरेदिति । इदं सर्वं वृत्तं मल्लिनाथेन नैषधचरितमपि व्याख्यातमिति चाग्रे प्रपञ्चयिष्यामः ॥

येन नारायणेन नैषधचरितं व्याख्यातं सोऽन्यो नारायणो वेदकरोपनामको महालसानरसिंहपुत्रो न तु नाम्नामल्लिनाथपुत्रो यथाह नैषधचरितटीकारम्भे

---

(१) ब्रह्मेति एकसंख्याबोधकम् एकमेवाद्वितीयं ब्रह्मेति श्रुतेः । काले विक्रमसंवत्सर इति यावत् यतः सरस्वतीतीर्थेन वाराणस्यामेव निवसता टीका कृता वाराणस्यां तु विक्रमसंवत्सरस्यैव प्रचारात् अयमश्लोकेन नरहरिजन्मकालिकग्रहस्थितिवर्णनाच्च । अयमेवार्थो भट्टवामनाचार्याणामपि सम्मतः । सरस्वतीतीर्थस्य वाराणसेयत्वमयमश्लोकेन स्फुटमत्र विस्तरभीत्या न लिखितमिति ॥

"नत्वा श्रीनरसिंहपण्डितपितुः पादारविन्दद्वयं
मातुश्चापि महालसेत्यभिधया विख्यातकीर्तेः क्षितौ।
श्रीरामेश्वरसोतयोः सुमनसोर्गुर्वोरगर्वो यथा-
बुद्धि श्रीनिषधेन्द्रकाव्यविवृतिं निर्माति नारायणः॥"

इति॥

नरहरिणापि नैषधचरितं व्याख्यातं सोऽन्यो नरहरिः यथाह नैषधचरितटीकाप्रथमसर्गान्ते

"यं प्रासूत त्रिलिङ्ग-
क्षितिपतिसतताराधिताङ्घ्रिः स्वयम्भूः
पातिव्रत्यैकसीमा
सुकविनरहरिं नालमा यं च माता।
यं विद्यारण्ययोगी
कलयति कृपया तत्कृतौ दीपिकाया-
माद्यः सर्गोतिमाद्य-
त्कविकुलविजयी चारु नीराजितोऽभूत्" ॥इति॥

---

ततश्चान्योऽपि मल्लिनाथ आसीत्। वाराणसीस्थराजकीयसंस्कृतपाठशालीयसामवेदीयराणायनिशाखीयारण्यगानपुस्तके (७ संख्यके) लेखकेनोद्धृतो यथा "संवत् १५६७ वर्षे चैत्रसुदि ४ बुधवासरे मझिआरी(१)*****छ पुत्त्रमल्लिनाथपाठार्थे विश्वनाथसुत-आदित्येनालेखि।" पुस्तकमिदं कागजाख्याधारे आर्यावर्तप्रचलिताकारविशिष्टदेवनागराक्षरैर्लिखितम्॥

---

(१) अस्मिन्नेव पुस्तके ५४ पत्रे "आरण्यक समाप्तमिति"। "मझिआरीग्रामे" इति च लिखितमस्ति।

तद्भिन्नोऽपि मल्लिनाथ आसीत् । यस्य पुत्रेण लिखितं कुमारसम्भवकाव्यपुस्तकमष्टमसर्गान्तमत्यन्तपरिशुद्धं सटिप्पणमस्मन्निकटे वर्तते तत्र लिपिकाल एवं लिखितः ।

"संवत् १६०३ वर्षे आनन्दनामसंवत्सरे ज्येष्ठवदि १ शनौ दिने काश्यामन्तर्गृहे श्रीविश्वेश्वरप्रसादेन मल्लिनाथात्मजेन गणेशपण्डितेन गौडेन स्वपरोपकारार्थं लिखितमिदं पुस्तकम् ॥"

---

तद्भिन्नोऽपि मल्लिनाथो येन च चिकित्साशास्त्रेऽनेके निबन्धाः कृता यथाह स एव स्वकृतपथ्यापथ्यनिरूपणे । "शाके वेदाब्धिशास्त्रेन्दौ १६४४ मल्लिनाथो भिषग्वरः । चक्रे बालावबोधाय पथ्यापथ्यनिरूपणम् ॥" १६४४ शाकवर्षे १७७९ विक्रमसंवत्सरेऽयं मल्लिनाथ आसीदिति ।

---

जैनास्तु पार्श्वनाथचरितं प्रमाणयन्तश्चतुर्विंशतितीर्थङ्करेषूनविंशो मल्लिनाथ इति वदन्तस्तन्नाम्नैव लब्धनामा पञ्चकाव्यटीकाकारो मल्लिनाथः(१) पूर्वं जैनः पश्चाद् ब्राह्मणः संवृत्तः अनेके पूर्वं जैनाः पश्चात् संस्कारं विधाय ब्राह्मणाः क्षत्रियाश्चाभूवन्निति धर्मस्थितिस्थापकभूतानां शङ्कराचार्यादीनामितिहासग्रन्थादवगतेरिति वदन्ति । तत्तूपहासास्पदम् निरूपितानां मल्लिनाथानां कस्मिंश्चिदपि ग्रन्थे आर-

(१) मल्लिनाथशब्दस्यार्थस्तु "मल्लो महाबलो मल्लिर्मल्लिकाकुसुमप्रिय" इति शिवनामाष्टोत्तरशतकात् मल्लिः शिवः । मल्लते धारयति विज्ञानमिति मल्ल + सर्वधातुभ्य इन् उणादौ ४ । ११७ । ईशानः सर्वविद्यानामिति श्रुतेश्च । मल्लिर्नाथो यस्य स मल्लिनाथो रामनाथवदिति । मल्लिश्चतुर्विंशतेरर्हतां मध्ये ऊनविंश इति हेमचन्द्रः १ । २८ ।

म्भसमाप्तिवाक्येषु जैनत्वानुपलब्धेः नाममात्रसाम्यादेव जैनत्वे गौतममहावीरस्वामिसंवादात्मकानां जैनागमानां दर्शनात् महावीरस्वामिशिष्यस्य गणधरस्य जैनमुख्यस्य गौतमस्यापि ब्राह्मणत्वापत्तेरहल्यापतिगौतमस्यापि जैनत्वापत्तेश्च ।

A C Burnell. ए. सी. बर्नेल् महाशयप्रकाशिते वंशब्राह्मणे तु प्रतिपादितम् काकटेयराज्ये १३१० ईसवीयवर्षे राजा प्रतापरुद्रदेवाभिध आसीत् तत्समये सरस्वतीविलासनामको ग्रन्थो रचित इति कोलाचलमल्लिनाथपुत्रः कुमारस्वामी निरूपयति ।

रामकृष्णगोपालभाण्डारकर, एम्. ए., पीएच्. डी., महाशयसङ्कलिते १८९७ इसवीयवर्षसम्बन्धिरिपोर्टपुस्तके प्रतिपादितम् उत्कलदेशे १२८२–१३०० ईसवीयवर्षे नरसिंहराज आसीत् तत्समये विद्याधरेण एकावलीग्रन्थो रचितः स च मल्लिनाथेन व्याख्यात इति ।

Theodor Aufrecht's Catalogus Catalogorum. औफ्रेख्ट्महाशयसङ्कलिते सूचीपत्राणां सूचीपत्रपुस्तके २३९ पृष्ठे लिखितमस्ति आदित्यवर्मणः पुत्रो मल्लिनाथः तत्पुत्रस्त्रिविक्रमदेवोऽनेन प्राकृतव्याकरणवृत्तिर्निर्मितेति ।

अस्माभिस्त्वेवमनुमीयते । वाराणसीस्थराजकीयसंस्कृतपाठशालीये (१०० संख्यके) कोलाचलमल्लिनाथसूरिकृतकिरातार्जुनीयटीकाघण्टापथपुस्तके लेखकेन लिपिकालः १५८० शाकवर्षो लिखितः(१) । तेनैव मल्लिनाथेन

(१) "शके १५८० जयवत्सरे दक्षिणायने शरदृतौ कार्त्तिके मासे कृष्णपक्षे द्वादशीपूर्वकत्रयोदश्यां तिथौ सायं सुरारिगुरुवासरे हरिहरेश्वरपुण्यतीर्थवासिभट्टंभट्टात्मजकाव्यवक्तृसुधीनारायणाभिधानेन गौतमी-

च किरातार्जुनीयटीकायां(१) ४ सर्गे उपारता इति १० श्लोकव्याख्यायां "पीयूषवर्ष(२)स्त्वेकदेशिसमासमेवाश्रित्य समासान्तमाहे"त्युक्तम् । पीयूषवर्षस्तु तत्त्वचिन्तामण्यालोकचन्द्रालोकप्रसन्नराघवनाटकादिग्रन्थकर्ता पक्ष-

---

तटस्थजनस्थाने किरातोपायघण्टापथाख्यपुस्तकं लिखितमात्मकार्यार्थं परोपकारार्थम् ।" इति तत्पुस्तकस्यान्तिमपत्त्रे लिखितमस्ति ॥

(१) रघुवंशादिनैषधान्तकाव्यटीकायाः सटीकतार्किकरक्षाटीकायाश्चैकमल्लिनाथकर्तृकत्वं तेनैव मल्लिनाथेन के के ग्रन्था रचिता इति चाग्रे सविस्तरं निरूपयिष्यते ।

(२) पीयूषवर्षकृता किरातार्जुनीयटीका तु वाराणसीस्थराजकीयसंस्कृतपाठशालीयभूतपूर्वाध्यापकानां त्रिपाठिवेचनरामशर्मणां निकटे आसीत् । मुद्रिते मल्लिनाथकृतटीकापुस्तके तु पीयूषवर्ष इत्यस्य स्थाने "प्रकाशवर्ष" इति केनचिच्छोधितम् । औफ्रेखट्महाशयसङ्कलितसूचीपत्त्रदर्शनादवगम्यते प्रकाशवर्षकृतापि काचित् किरातार्जुनीयटीका वर्तते तस्यामयं पाठो वर्तते न वेति विद्वद्भिः समालोचनीयम् ।

एवं मुद्रिते मल्लिनाथकृतटीकासहितशिशुपालवधपुस्तके १ सर्गे गतं तिरश्चीनमिति २ श्लोकव्याख्याने "दिवाकरस्तु वृत्तरत्नाकरटीकायां प्रथमपठितेन 'द्विधाकृतात्मा किमयं दिवाकरो विधूमरोचिः किमयं हुताशनः ।' इति चरणद्वयेन सहेममेव श्लोकं षट्पदच्छन्दस उदाहरणमाहे"ति पाठो दृश्यते । अयं च केनचित् कस्मिँश्चिल्लिखितपुस्तके टिप्पण्यादिरूपेण लिखितः केनचिन्मूले एव प्रक्षिप्तः यतो मल्लिनाथकृतटीकापुस्तकस्य १७१५ संवत्सरलिखितस्योपलब्धेः दिवाकरेण च १७४० संवत्सरे वृत्तरत्नाकरस्य टीकाया रचितत्वात्* वाराणसीस्थराजकीयसंस्कृतपाठ-

---

* "भारद्वाजकुले श्रुतिस्मृतिपटुः श्रीसूर्यभक्तस्तथा
ऽस्माराधनतत्परोऽपि(?)च महादेवोऽभवत् तार्किकः ।
तत्पुत्रेण दिवाकरेण रचिते श्रीवृत्तरत्नाकरा-
दर्शे भट्टमतानुसारिणि परं षष्ठः समाप्तिं गतः ॥

धरान्वर्थनामा जयदेवमिश्र(१) एव । स च १४७८ शाक-वर्षे वर्तमानस्य मिथिलादेशाधिपतेः श्रीमहेशठक्कुरस्य मध्यमभ्रातुर्भगीरथठक्कुरस्य गुरुरासीदिति १५८० शाक-वर्षात् पूर्वं १४७८ शाकवर्षात् पश्चात् तदासन्नसमये(२) वा रघुवंशादिटीकाकारस्य कोलाचलमल्लिनाथसूरेः स्थिति-रासीदिति ।

---

शालीये प्राचीने माघटीकापुस्तके ऽस्मन्निकटे वर्तमाने प्राचीने पुस्तके ऽप्यस्य पाठस्याभावाच्च । खेदस्थानं यदिदानीमपि शोधकमहाशयाः मल्लि-नाथकृतकाव्यटीकासु निवेशप्रवेशादिना टीकायन्यमन्तर्गडुं कृत्वाल्पज्ञजन-भ्रान्तिजनकं कुर्वन्ति न तु प्राचीनपरिशुद्धादर्शसंवादपूर्वकं परिष्कुर्वन्तीति ।

(१) जगदीशभट्टाचार्येणानुमानदीधितिटीकायां सिद्धान्तलक्षण-प्रकरणे "पक्षधरमिश्रादिसम्मतत्वात्" "शब्दमण्यालोके तैः सार्थकत्वं समर्थितम् ।" इत्युक्तत्वाद् आलोकग्रन्थस्य जयदेवकृतत्वात् जयदेव एव पक्षधरः । पक्षस्य मासार्द्धस्य तिथिवारनक्षत्रयोगकरणानि एकदैव पञ्चाङ्गं दृष्ट्वा मनसि धारयतीति पक्षधर इति किंवदन्ती ।

(२) महेशठक्कुरशिष्येण केनचित् पण्डितेन दिल्लीनगराधिष्ठि-तात् भारतेश्वरात् मिथिलादेशाधिपत्यं प्राप्य गुरवे गुरुदक्षिणात्वेन तत् समर्पितमिति किंवदन्त्या महेशठक्कुरेण वृद्धावस्थायां यौवनान्ते वा राज्यं प्राप्तम् । महेशठक्कुरानुजस्य भगीरथस्य च "विंशाब्दे जयदेवपण्डितकवेस्त-र्काब्धिपारं गत" इति द्रव्यकिरणावलीप्रकाशटीकान्ते उक्त्या जयदेवस्य

---

पूर्णाब्धिसप्तेन्दुमिते १७४७ प्रवर्षे सत्कार्त्तिके मासि विशुद्धपक्षे ।
तार्तीयपूर्वं दिवसे सुपुण्ये ह्यादर्श इत्थंघटितः समाप्तः ॥"
इति तट्टीकान्ते वर्तते ।

अत्र वर्ष इत्यनेन विक्रमसंवत्सरो ग्राह्यः इण्डिआआफिसपुस्तकालये वर्तमाने पुस्तके १६९६ शालिवाहनवर्षस्य लिपिकालत्वेन लिखितत्वात् ।

अनेनैव दिनकरापरनामधेयेन दिवाकरेण सिद्धान्तमुक्तावल्या व्याख्यानं दिन-करीत्यपरनामधेयं मुक्तावलीप्रकाशाभिधं प्रणीतम् ।

तथाहि चन्द्रालोकारम्भे

"चन्द्रालोकमयं स्वयं वितनुते पीयूषवर्षः कृती।"

प्रथममयूखसमाप्तावपि

"महादेवः सत्त्वप्रमुखमखविद्ध्येकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ।
अनेनासावाद्यः सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः॥

इति पीयूषवर्षपण्डितजयदेवविरचिते चन्द्रालोके प्रथमो मयूखः॥"

अन्ते

"पीयूषवर्षप्रभवं चन्द्रालोकं मनोहरम्।
सुधानिधानमासाद्य श्रयध्वं विबुधा मुदम्॥
जयन्ति याज्ञिकश्रीमन्महादेवाङ्गजन्मनः।
सूक्तपीयूषवर्षस्य जयदेवकवेर्गिरः॥"

प्रसन्नराघवनाटकेऽपि प्रस्तावनायाम्

"विलासो यद्वाचामसमरसनिष्यन्दमधुरः
कुरङ्गाक्षीबिम्बाधरमधुरभावं गमयति।
कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः॥

---

पण्डितत्वं कवित्वं निबन्धकर्तृत्वं च भगीरथस्य विंशाब्दे* सम्पन्नमासीदिति तस्यापि वृद्धत्वसम्भवे किरातार्जुनीयटीकाया यौवने प्रणीतत्वे तदानीं किरातार्जुनीयटीकायाः ७५ वर्षप्राचीनत्वकल्पनमपि सम्भवतीति।

गीतगोविन्दकर्ता जयदेवस्त्वस्माद्भिन्न एवेति प्रसन्नराघवभूमिकायां प्रतिपादितं पण्डितगोविन्ददेवशास्त्रिणा काशीविद्यासुधानिधौ।

---

* विंशतिवर्षमिते वयसीत्यर्थः।

अपि च ।

लक्ष्मणस्येव यस्यास्य सुमित्रागर्भजन्मनः ।
रामचन्द्रपदाम्भोजे भ्रमद्भृङ्गायते मनः ॥

नटः । एवमेतत् । नन्वयं प्रमाणप्रवीणोऽपि श्रूयते । तदिह चन्द्रिकाचण्डातपयोरिव कवितातार्किकत्वयोरेकाधिकरणतामालोक्य विस्मितोऽस्मि ।

सूत्रधारः । क इह विस्मयः ।

येषां कोमलकाव्यकौशलकलालीलावती भारती
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते ।
यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिता-
स्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥"

इति ।

चिन्तामण्यालोकारम्भे च

"अधीत्य जयदेवेन हरिमिश्रात् पितृव्यतः ।
तत्त्वचिन्तामणेरित्थमालोकोऽयं प्रकाश्यते ॥"

एतेन जयदेवमिश्र एव(१) पीयूषवर्षपण्डितस्तार्किकः कविश्च । अस्य माता सुमित्रा पिता महादेवो गुरुः पितृव्यश्च हरिमिश्र इति निष्पन्नम् ।

भगीरथठक्कुरेण च द्रव्यप्रकाशिकायां द्रव्यकिरणावलीप्रकाशटीकायामन्ते

"विंशाब्दे जयदेवपण्डितकवेस्तर्काब्धिपारं गतः
श्रीमानेष भगीरथः समजनि श्रीचन्द्रपत्यात्मजः ।
श्रीधीरातनयेन तेन रचिता श्रीमन्महेशाग्रज-
श्रीदामोदरपूर्वजेन जयतादाचन्द्रमेषा कृतिः ॥"इति ।

---

(१) पितृव्यः पितुर्भ्राता स च मिश्रोपनामक इति जयदेवोऽपि मिश्रोऽत्र नास्ति वादावकाशः ।

मिथिलादेशे जनकपुरस्थानात् पञ्चक्रोशान्तरे ईशानदिग्भागे धनुःक्षेत्रे 'धनुखा' इतिप्रसिद्धे कूपे प्रस्तरपट्टे वक्ष्यमाणं पद्यं लिखितमस्ति।

"आसीत् पण्डितमण्डलाग्रगणितो भूमण्डलाखण्डलो
जातः खण्डवलाकुले(?)गिरिसुताभक्तो महेशः कृती।
शाके रन्ध्रतुरङ्गमश्रुतिमही १४७८ संलक्षिते हायने
वाग्देवीकृपयाशु येन मिथिलादेशः समस्तोऽर्जितः॥"

इत्यादीन्यनेकानि पद्यानि तत्र वर्तन्ते।

श्रीमहेशठक्कुरेण थेघठक्कुरापरनामधेयेन भगीरथठक्कुरेण च मेघठक्कुरापरनामधेयेन(१) चानेके ग्रन्था रचिताः विस्तरस्तु तेष्वनुसन्धेयः।

अपि च।

मार्कण्डेयपुराणान्तर्गतस्य चण्ड्याः सप्तशतीस्तोत्रस्य व्याख्यानं चित्रकूटसमीपे १६३३ वैक्रमवर्षे मल्लिनाथात्मजेन भीमसेनानुजेन वीरभद्रेण रचित(२)मित्ययं

(१) "यः कैशोरे विश्वविख्यातकर्मा धर्माचार्यः श्रीमहादेवशर्मा।
तत्सोदर्यो वर्द्धमानस्य सूक्तौ भावं मेघः सम्यगाविष्करोति॥"

इति भगीरथठक्कुरकृतद्रव्यप्रकाशिकारम्भे दर्शनात् तस्य मेघापरनामधेयत्वं श्रीमहेशठक्कुरस्य महादेवापरनामधेयत्वं च स्फुटमवगम्यत इति।

(२) ग्रन्थेऽस्मिन् स्थूलमानेन श्लोकानां पञ्च सहस्राणि वर्तन्ते। आरम्भे "श्रीकृष्णद्वैपायनाभिधानमहर्षिवेदव्यासप्रोक्तमार्कण्डेयपुराणान्तर्गतजयाख्यदेवीमाहात्म्यप्रकाशकसप्तशतिकाभिधानं सावर्णिः सूर्यतनय इत्यादिसावर्णिर्भविता मनुरित्यन्तग्रन्थसन्दर्भं क्रौष्टुकिनामा द्विजन्मा प्रियशिष्यो मार्कण्डेयं शिरसा प्रणम्यापृच्छत्।" इत्यादि।

पुस्तकान्ते लेखकेन लिपिकाल एवं लिखितः।

"खगुणर्षियुतैश्चन्द्रैर्योजिते ऽब्दे १७३० तु वैक्रमे ।
नभसोऽग्नितिथौ शुभ्रे छायाहृदयनन्दने ॥
लिखितं नीलकण्ठेन दुर्गापुस्तं सटीककम् ।
लिखितं खलु यत्नेन यश्चोरयति पुस्तकम् ॥
शूकरी तस्य माता स्यात् पिता तस्य च गर्दभः ॥" इति ।

मल्लिनाथवद्वीरभद्रोऽपि महावैयाकरणोऽस्यां टीकायां प्रतिश्लोकं बहूनां पदानां पाणिनिव्याकरणेन साधुत्वं दर्शयति । क्वचित् क्वचिदेकस्यैव वाक्यस्य प्रकारान्तरैर्नानाविधानर्थान् निरूपयति प्रमाणयति च तैत्तिरीयोपनिषदं भगवद्गीतां व्यासं पाणिनिं याज्ञवल्क्यं मातृगुप्ताचार्यं मुरारिमिश्रममरकोशं विश्वकोशं यादवकोशं मेदिनीकरकोशं च । अस्यां टीकायां कस्यापि टीकाकारस्य नाम न लिखति किं तु प्रतिश्लोकं "कस्यचिन्मते" "अपर आह" एवं रूपेण मतान्तरमुपन्यस्यति स च कश्चिदतिप्राचीनष्टीकाकारो यतस्तेन पाणिन्यमरहेमचन्द्रयादवचीरतरङ्गिण्यादयो ग्रन्थाः प्रमाणत्वेनोपन्यस्ताः ।

अपरोऽपि वीरभद्र आसीद् येन वात्स्यायनकामसूत्रव्याख्यानभूत आर्याच्छन्दसा निबद्धः कन्दर्पचूडामणिग्रन्थो रचितः । कन्दर्पचूडामणिग्रन्थे च भोजराजनाम्न उल्लेखात् स्वस्य च वीरशब्देनोल्लेखनात् स कश्चिदनतिप्राचीनो राधिराज इत्याभाति । यथाह कन्दर्पचूडामणौ ।

"अधिकरणे पञ्चमके कुरुते व्याख्या तृतीयके ऽध्याये ।
भूचक्रचक्रवर्ती वीरः श्रीवीरभद्रोऽसौ ॥

अस्मन्निकटे वर्तमानं पुस्तकं चाद्यन्तहीनम् आकारेण वर्षाणां त्रिशत्याः पूर्वं लिखितमिवाभाति ।

अपरोऽपि दीक्षितभीमसेन आसीद् येन सुधासागरनामकं काव्यप्रकाशव्याख्यानं १७७९ वैक्रमसंवत्सरे कृतं चण्डीसप्तशतीव्याख्यानमपि । अयं च कान्यकुब्ज इति तट्टीकादर्शनात् व्यक्तमवगम्यते ।

१६३३ संवत्सरोऽपि पूर्वोक्तां मल्लिनाथस्य स्थितिं द्रढयति । तथाहि

तद्व्याख्याने प्रथमाध्यायान्ते

"यो नित्यं गुरुपादपूजनरतः श्रीमल्लिनाथात्मजः
क्षेमश्रीवदनाम्बुजाहिमकरः श्रीवीरभद्रो द्विजः ।
देवीचारुपदाब्जदत्तहृदयो लोकप्रियस्तत्कृतौ
टीकायां किल चण्डिकानुचरिते ऽध्यायोयमाद्यो
गतः॥"इति ।

एवमेव द्वितीयतृतीयचतुर्थानामध्यायानामन्ते ।

पञ्चमाध्यायान्ते तु

"यस्मै वाग्वादिनीयं वरममलमदाच्छ्रीभवानी पुनर्यं
कारुण्यादात्मभृत्यं कलयति सुषुवे मल्लिनाथः सुतं यम् ।
क्षेमश्रीर्वर्धयन्ती सुखमतुलमलं प्राप चाङ्के गतं यं
तस्यागात् पञ्चमोसौ स्तुतिललितगुणोऽध्याय एवात्र
देव्याः ॥" इति ।

अष्टमाध्यायान्ते तु

"येन द्विजातिनिवहः समाहृतो वीरभद्रेण ।
तेन व्यधायि देव्याष्टीकायामष्टमोऽध्यायः ॥"इति ।

दशमाध्यायान्ते तु

"शास्त्रयुक्त्या जिता येन वीरभद्रेण वादिनः ।
तत्सृष्टदुर्गाटीकायामध्यायो दशमो गतः ॥"इति ।

एकादशाध्यायान्ते तु

"शब्दशास्त्रार्थसाहित्यच्छन्दोव्याख्यानकोविदः ।
यस्तेन वीरभद्रेण चण्डिकाविवृतिः कृता ॥"इति ।

समाप्तौ तु

"शास्त्रयुक्त्या जिता येन वीरभद्रेण वादिनः ।
तत्सृष्टदुर्गाटीकायां गताध्यायस्त्रयोदशः ॥

यो वै भूपालचूडामणिनिकरकरैरर्चिताङ्घ्रिर्द्विजेन्द्रः
काणादे चाक्षपादे कपिलफणिपतिप्रोक्ततन्त्रे च तन्त्रे(१) ।
वैयासे पाणिनीये ऽप्रतिहतधिषणोऽलङ्कृतौ काव्यमूले
टीकां कृत्वाग्रगण्योऽभवदिह विदुषां मल्लिनाथः कवीन्द्रः ॥
तत्सूनुर्वीरभद्रः कुलपतिपदभाग्भीमसेनानुजोऽसौ
चण्ड्याः स्तोत्रस्य टीकां विबुधजनमनोमोदसम्पादयित्रीम् ।
वर्षे रामाङ्कचन्द्रे शिवनयनयुते १६३३ चित्रकूटोपकण्ठे
चक्रे चण्डीप्रसादात् प्रतिपदममलं भावयंस्तत्पदाब्जम् ॥"
इति ।

मल्लिनाथेन काव्यटीकासु तार्किकरक्षाटीकायामपि "कोलाचलमल्लिनाथसूरिविरचितायां"मित्यादेर्लिखितत्वात् कोलाचलनिवासीत्युक्तं भवति कोलप्रधानोऽचल इति कोलश्चासावचलश्चेति वा व्युत्पत्त्या कोलनामकः कश्चित् पर्वतः(२) स च चित्रकूटसमीपस्थ इति महाभारतात् मार्कण्डेयपुराणाच्च प्रतिभाति । तथाहि

(१) कपिलप्रोक्ततन्त्रे सांख्ये फणिपतिप्रोक्ततन्त्रे योगशास्त्रे तन्त्रे जैमिनिप्रोक्ते पूर्वमीमांसाशास्त्रे ।

(२) पर्वताः । अद्रिगोत्रगिरिग्रावाचलेत्यमरः ।

• केचित्तु वराहः शूकरो घृष्टिः कोलः पोत्री किरिः किटिरित्यमरकोशात् कोलाचलं कूर्माचलवत् वाराहक्षेत्रं वर्णयन्तः कान्यकुब्जदेशे गङ्गातटे वर्तमानमनेकपुरातनविध्वस्तराजहर्म्यादियुतमुच्चावचप्रदेशमिदानीं "सोरौं वदरिआ" इति प्रसिद्धमेवेति वदन्ति ।

मार्कण्डेयपुराणान्तर्गतचण्डीसप्तशत्यां "कोलाविध्वंसिनस्तथे"ति यदुक्तं तत्र कोलानाम नगरी सुरथराजस्य राजधानीति टीकाकारैर्व्याख्यातत्वात् सा कोलाचलशब्देन कथमपि न व्यपदेशमर्हतीति विद्वद्भिर्विवेचनीयम् ।

महाभारते सभापर्वणि ३० अध्याये(१)

"वशे चक्रे महातेजा दण्डकांश्च महाबलः ।
सागरद्वीपवासांश्च नृपतीन् म्लेच्छयोनिजान् ॥
निषादान् पुरुषादांश्च कर्णप्रावरणानपि ।
ये च कालमुखा नाम नरराक्षसयोनयः ॥
कृत्स्नं कोलगिरिं चैव सुरभीपट्टणं तथा ।
द्वीपं ताम्राह्वयं चैव पर्वतं रामकं तथा ॥" इति ।

अत्र रामकं पर्वतमित्युक्त्या चित्रकूट एव बोध्यः मल्लिनाथेनैव कश्चित् कान्ताविरहगुरुणेति मेघदूतारम्भश्लोकव्याख्याने "रामगिरेश्चित्रकूटस्ये"ति व्याख्यातत्वात् । सुरभीपट्टणस्येदानीं किमपि नामान्तरं जातमित्यतस्तन्न विज्ञायते ।

मार्कण्डेयपुराणे कूर्मनिवेशाध्याये

"आवन्तयो दासपुरास्तथैवाकरिणो जनाः (? ।
महाकर्णाः सकर्णाश्च गोनन्दाश्चित्रकूटकाः ॥
चोल्लाः कोलगिराश्चैव क्रौञ्चद्वीपाः जटाधराः ।
कावेरा ऋष्यमूकस्था नासिक्याश्चैव ये जनाः ॥
शङ्खमुक्ताश्च वैदूर्यशैलप्रान्तरिताश्च ये(२)॥"इत्यादि।

इत्यनेन मल्लिनाथस्य चित्रकूटसमीपस्थत्वात् वीरभद्रेण च चित्रकूटोपकण्ठे सप्तशतीटीकाप्रणयनाद् द्वयोरप्येकदेशनिवासित्वं सिद्धम् । वाणीं काणभुजीमिति श्लोकस्य काणादे चाक्षपादे इत्यनेन श्लोकेनानूदितत्वात्

---

(१) वङ्गदेशस्थ—एशिआटिक्सोसाइटी—द्वारा मुद्रिते महाभारतपुस्तके ३५० पृष्ठे द्रष्टव्यम् ।

(२) पाठोऽयं वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तके १४३ पत्रे वर्तते ।

रघुवंशादिकाव्यटीकाकर्तुर्मल्लिनाथस्य पुत्त्रो वीरभद्र इत्यपि सुवचम्। मल्लिनाथः शिशुपालवधादिटीकासु मेदिनीकरकृतनानार्थकोशं प्रमाणयति(१) वीरभद्रोऽपि सप्तशतीटीकायां १ अध्याये २ श्लोकव्याख्याने "माया स्याच्छाम्बरीबुद्ध्योरिति मेदिनीकरः।" २ अध्याये ३० श्लोकव्याख्यानेऽपि "अट्टं भक्ते च शुष्के च क्षौमेऽत्यर्थे गृहान्तरे इति मेदिनीकरः।" इति। मेदिनीकरश्च खृस्ताब्दस्य चतुर्दशशतके समभवदिति रामकृष्णगोपालभाण्डाकर, एम्. ए, पीएच्. डी., महाशयेन मालतीमाधवभूमिकायां निरूपितम् तदप्यस्मन्निरूपितमल्लिनाथतत्पुत्त्रस्थितौ साधकमेवेति।

कोलाचलमल्लिनाथेन रघुवंशटीकायां "व्याचष्टे कालिदासीयं काव्यत्रयमनाकुल"मित्युक्तत्वात् रघुवंशकुमारसम्भवमेघदूतटीकानां सञ्जीविनीत्येकनामत्वात् तासु वाणीं काणभुजीमितिमुद्राश्लोकदर्शनात् तासामेककर्तृकत्वं सर्वजनसुप्रसिद्धम्। शिशुपालवधटीकायां १ सर्गे अभूदभूमिरिति ४२ श्लोकव्याख्याया"मित्युक्तमस्माभिर्देवपूर्वं गिरिं ते इति, धनुरुपपदमस्मै वेदमभ्यादिदेश इत्येतद्व्याख्यानावसरे सञ्जीविन्यां घण्टापथे च।" शिशुपालवधटीकायां १३ सर्गे मुदितैरिति २४ श्लोकव्याख्याने "तदेतत्सर्वमस्माभिः कालिदासत्रयसंजीविन्यां विवेचितम्।" अपि च शिशुपालवधटीकायां १२ सर्गे उत्क्षिप्तगोत्र इति ५ श्लोकव्याख्याने "तदेतत् सम्यग्विवेचितमस्माभिः किरातार्जुनीयटीकायां घण्टापथे"। इत्यनेन कालिदासत्रयसञ्जीविन्याः शिशुपालवधसर्वङ्कषा-

(१) शिशुपालवधटीकायां २ सर्गे "यजतां पाण्डव"इति ६५ श्लोकव्याख्याने १४ सर्गे "निर्जिताखिल"ति २९ श्लोकव्याख्याने द्रष्टव्यम्।

टीकाकिरातार्जुनीयघण्टापथटीकयोरप्येकमल्लिनाथकर्तृ-कत्वं सुव्यक्तम्[१]। मल्लिनाथेन तार्किकरक्षाटीकायामस्मिन्नेव पुस्तके ३९ पृष्ठे "स्फुटीकृतं चैतदस्माभिः पञ्चकाव्यादिटीकासु अलं महीपाल तव श्रमेणेत्यादावित्युक्तत्वात् आदौ वाणीं काणभुजीमितिश्लोकस्य वर्तमानत्वात् तदेकमल्लिनाथकर्तृकत्वमस्यापि सिद्धम्।

केचित्तु "स्पष्टीकृतं चैतदस्माभिः पञ्चकाव्यादिटीकासु" इति मल्लिनाथेनोक्तत्वात् नैषधचरितस्य तदानीमसत्त्वात् नैषधचरितं तेन न व्याख्यातम्। मुद्रिता जीवातुसमाख्या नैषधचरितटीका त्वाधुनिकेन केनचित् पण्डितेन पुस्तकविक्रयप्राचुर्यार्थं कृतेति वदन्ति। तन्न मल्लिनाथेन रघुवंशटीकायां ४ सर्गे स सैन्यपरिभोगेणेति ४५ श्लोकव्याख्याने "नैषधे च। अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा"[२] इति। शिशुपालवधटीकायामपि ३ सर्गे कपाटविस्तीर्णेति १३ श्लोकव्याख्याने "प्रायेणैकार्थमप्यनेकश्लोकमुक्तिविशेषलाभाल्लिखन्ति कवयः यथा हि नैषधे आदावेव निपीयेत्यादिश्लोकद्वयं तथा स्वकेलिलेशेत्यादिश्लोकद्वयं चे"त्युक्तत्वात् तदानीमेव मल्लिनाथेन नैषधचरितस्य समालोचितत्वात् भगीरथेन च नैषधचरितगूढार्थदीपिकायां टीकायां[३] मल्लिनाथकृतजीवातुटी-

---

(१) मयाध्ययनसमये मल्लिनाथकृतकाव्यटीकायन्यानामपि विवरणस्य मनोरमं पुस्तकं दृष्टम्। खेदितोऽस्मि तत् कौतुककरं पुस्तकमिदानीं हस्तगतं न भवतीति।

(२) नैषधे ३ सर्गे ९३ श्लोकः।

(३) अस्याष्टीकायाः पुस्तकं १६२९ शाकवर्षलिखितं वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालये वर्तते। अत्रानेकेषु स्थलेषु पूर्वलि-

काया अनेकेषु स्थलेषूद्धृतत्वाच्च । तथाहि नैषधगूढार्थदीपिकायां १ सर्गे कथं विधातर्मयि पाणिपङ्कजात् तव प्रियाशैत्यमृदुत्वशिल्पिन इति १३८ श्लोकव्याख्याने "कथमिति । हे विधातः भो विधे मयि विषये तव ब्रह्मणः पाणिर्हस्तः" "लिपिरक्षरपङ्क्तिः तवेत्यस्य विशेषणमिति नृहरिः ।" "जीवातुस्तु पाणेर्विशेषणमिति ।" इति भगीरथः ।

पण्डितजीवानन्दविद्यासागरमुद्रिते जीवातुसहिते नैषधचरितपुस्तके ५५ पृष्ठे "कथमिति । हे विधातः प्रियायाः वरटायाः शैत्यमृदुत्वशिल्पिनस्तादृकतरङ्गशैत्यमार्दवनिर्माणकात् तव पाणिपङ्कजात्"इति ।

---

खितेषु वाक्येषु कुण्डलनां विधाय तदर्थबोधकैरेव पदान्तरैरपूर्वाणि वाक्यानि लिखितानि अनेकेषां टीकाकाराणां मतानि पत्रपार्श्वभागे टिप्पणरूपेण लिखितानीतीदं पुस्तकं टीकाकारेणैव शोधितं समालोचितं वेत्यनुमीयते । अत्र नृहरि–लक्ष्मण–नारायण–विश्वेश्वर–जगद्गुरु–ताण्डव–मुकुट–जीवातुप्रभृतिभिः शब्दैष्टीकान्तराणि प्रमाणयति । क्वचित् प्रकारान्तरैरनेकानर्थान् दर्शयति टीकाकारः । अस्मदवलोकितासु भवदत्त–गदाधर–नरहरि–नारायण–मल्लिनाथ–महेश्वर–भगीरथ–रामचन्द्र–प्रेमचन्द्र–भावार्थदीपिकाकारकृतासु टीकासु सर्वापेक्षया महती सर्वोत्तमा इयमेव टीका । अस्यां प्रतिसर्गमन्ते "इति श्रीकूर्माचलेन्द्रश्रीरुद्रचन्द्रगोत्रापत्यकल्पद्रुमसदृशराजर्षिवर्यश्रीमद्रुद्रद्योतचन्द्रात्मजश्रीज्ञानचन्द्राश्रितपुरोहितसोमयाजिपण्डितबलभद्रगोत्रापत्यश्रीहर्षदेवात्मजावसथ्यभगीरथविरचितायाः"मिति पुष्पिका वर्तते । अपि च

> "अध्यापकं विना यो नैषधगूढार्थदीपिकां टीकाम् ।
>
> पश्यति रसनाग्रे तु वाग्देवी तस्य स्फुरति भृशम् (?) ॥" इति ।

बहुखेदितोऽस्मि यदिदं पुस्तकं खण्डितमिति ।

नैषधगूढार्थदीपिकायां १ सर्गे अयि स्वयूथ्यैरिति १३६ श्लोकव्याख्याने "पुनः प्रियां प्रत्याह । अयीति । अयि प्रिये संबुद्धिरिति नृहरिः । अपीति पाठ इति जीवातुः । अपि चेत्यपेरर्थः ।"

पण्डितजीवानन्दविद्यासागरमुद्रिते जीवातुसहिते नैषधचरितपुस्तके ५५ पृष्ठे । "अपीति । अपि चेत्यपेरर्थः ।"

नैषधगूढार्थदीपिकायां १ सर्गे तवापि हाहा विरहात् क्षुधाकुला इति १४१ श्लोकव्याख्याने "तेषु प्रसिद्धेषु" "स्वसम्पादितेषु तेषु इति जीवातुः ।"

पण्डितजीवानन्दविद्यासागरमुद्रिते जीवातुसहिते नैषधचरिते ५६ पृष्ठे "क्षुधाकुलाः क्षुत्पीडिताः तेषु स्वसम्पादितेष्वित्यर्थः ।"

नैषधगूढार्थदीपिकायां २ सर्गे स गरुद्वनदुर्गदुर्ग्रहान् इति ४ श्लोकव्याख्याने "ह्रस्वान्तं पृथक्पदमिति जीवातुः । यत्तु गोस्त्रियोर्ह्रस्व इति तेनोक्तं तन्न स्त्रीप्रत्ययान्तत्वाभावात् अतो ह्रस्वो नपुंसके इति ह्रस्व इत्याहुः" ॥

पण्डितजीवानन्दविद्यासागरमुद्रिते जीवातुपुस्तके ६० "पृष्ठे तनुकण्डु यथा तथा गोस्त्रियोरुपसर्जनस्येति ह्रस्वः । नुनदे निवारितवान् स्वरितञित इत्यात्मनेपदम् ।"

एवमग्रेऽपि अनेकस्थलेषु वर्तन्ते ।

यद्यपि माघे मेघे गतं वय इति मल्लिनाथविषयककिंवदन्त्याऽनुमीयते वृद्धावस्थायां तेन नैषधचरितं व्याख्यातम् तथापि रघुवंशादिटीकास्विवानेकानाचार्याननेकान् ग्रन्थांश्च प्रमाणयति । तद्यथा मनुः विष्णुपुराण महाभारतं सामुद्रिकं वैजयन्तीकोशः हलायुधकोश वर्द्धमानः काव्यप्रकाशः क्षीरस्वामी पाणिनिः अमर-

कोशः वृत्तरत्नाकरः विश्वकोशः हलायुधकोशः तार्किकः उपाध्यायविश्वेश्वरभट्टारकः[1] एवमन्येऽपि ।

मल्लिनाथेन तार्किकरक्षाटीकायां ७६ पृष्ठे "प्रशस्तपादभाष्यनिकषटीकायामस्माभिर्व्याख्यातार्थो[2] द्रष्टव्य" एवमेव १३६ पृष्ठेऽप्युक्तत्वात् प्रशस्तपादभाष्यमपि विस्तरतो व्याख्यातमिति निष्पन्नम् ।

मल्लिनाथकृतामरकोशटीकाभट्टिकाव्यटीकैकावलीटीकादयो ग्रन्था न समालोचिता मयेति ।

वात्स्यायनापरनामधेयो मल्लिनागस्तु[3] नामत एव भिन्नो महर्षिरित्येतत् सर्वं न्यायवार्त्तिकभूमिकायां विस्तरेण निरूपयिष्यत इत्युपरम्यते ॥

| वाराणसीस्थराजकीय-<br>संस्कृतपाठशालीयपुस्तकालये<br>२२ जनवरी १९०३ । | विन्ध्येश्वरीप्रसादद्विवेदी |
|---|---|

(१) विश्वेश्वरभट्टारको नैषधचरितटीकाकारः ।

(२) आदर्शपुस्तके "प्रशस्तपादभाष्यनिष्कण्टकायामिति" पाठो दृश्यते स च प्रामादिकः १४२ पृष्ठे "निकषे द्रष्टव्य" इत्यस्य वर्तमानत्वात् ।

(३) क्वचित् मल्लनाग इति पाठः ।

अथ

## सटीकतार्किकरक्षाग्रन्थे निरूपितानां पदार्थाना-मकारादिक्रमेण सूचीपत्रम् ।

अथ

# तार्किकरक्षाग्रन्थस्य पदार्थनिरूपणक्रम-सूचीपत्तम् ।

# अथ
## सटीकतार्किकरक्षाग्रन्थे उद्धृतानामाचार्याणां
## सूचीपत्रम् ।

अथ

# सटीकतार्किकरक्षाग्रन्थे उद्धृतानां ग्रन्थानां सूचीपत्रम् ।

अथ

# सटीकतार्किकरक्षाव्याख्यायां कोलाचलमल्लिनाथसूरि-विरचितायां निष्कण्टकायामुद्धृतानामाचार्याणां सूचीपत्रम् ।

अथ

# सटीकतार्किकरक्षाव्याख्यायां कोलाचलमल्लिनाथसूरिविरचितायां निष्कण्टकायामुद्धृतानां ग्रन्थानां सूचीपत्रम् ।

अथ

## सटीकतार्किकरक्षाव्याख्यायां ज्ञानपूर्णविरचितायां लघुदीपिकायामुद्धृतानामाचार्याणां

## सूचीपत्रम् ।

अथ

## सटीकतार्किकरक्षाव्याख्यायां ज्ञानपूर्णविरचितायां लघुदीपिकायामुद्धृतानां ग्रन्थानां

## सूचीपत्त्रम् ।

# अथ सटीकतार्किकरक्षायाः
# शुद्धिपत्रम्[1] ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ३ | १४ | गृह्यत | गृह्यते |
| ४ | १६ | निःप्रयोजन | निष्प्रयोजन |
| ४ | २२ | दोषेष | दोषेषु |
| ६ | ८ | प्रमाणसम्बन्ध | प्रमासम्बन्ध |
| ७ | ११ | मत्त्वा | मत्वा |
| ७ | २१ | स्कन्दनीति | स्कन्दतीति |
| ९ | २१ | यथार्थ | याथार्थ्य |
| १० | १५ | व्यक्तुं | व्यङ्क्तुं |
| १० | १७ | प्रधान्यात् | प्राधान्यात् |
| ११ | १० | प्रमेति | प्रमेत्यनेन |
| १२ | १९ | प्रमाणलक्षण | प्रमालक्षण |
| १३ | २० | पूर्वाद्रुप | प्रपूर्वाद्रुप |
| १७ | २२ | प्रसक्तेन | प्रसक्तेर्न |
| १८ | ५ | तत्र वा | तत्रैव |
| २० | १५ | स्मृतीति | स्मृतीति । |
| २० | १५ | ज्ञापनाय । | ज्ञापनाय |
| २० | १८ | करणत्वा | कारणत्वा |
| २२ | २२ | मात्रंशयो | मात्रांशयो |
| २४ | १४ | नातीव युक्ति | नातीवयुक्ति |
| ३६ | ९ | त्स्वरदेवेत्या | त्स्वरवादित्या |
| ३८ | २३ | वैय | वैयर्थ्य |
| ४१ | १५ | त्रांश | त्तांश |
| ४२ | ८ | शाखागते | शाखाविहिते |

(१) यासामशुद्धीनां दर्शनमात्रादेव बोधो भवति तासां नात्र समुल्लेखः कृतः यथा ३ पृष्ठे १३ पङ्क्तौ "वाऽपिकस्य चित्" । एवं मध्ये ऽपि ज्ञेयम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ४९ | ६ | तद्द्रव्य | तद्द्रव्यं |
| ५६ | २१ | मत्वति | मत्वेति |
| ५७ | १४ | स्पुटार्थम् | स्फुटार्थम् |
| ६५ | २२ | व्याप्तिरिति | व्याप्तीति |
| ६८ | १८ | । तत् | तत् । |
| ७५ | १६ | साधन | साध्य |
| ७५ | १९ | साधन | साध्य |
| ७६ | ७ | कस्यचि | क्वचि |
| ७७ | ९ | व्यवहृाय | व्यवहृय |
| ८० | ९ | धर्मवत्त्वेति | धर्मवत्त्वेनेति |
| ८३ | ११ | द्वीतीय | द्वितीय |
| ८४ | १६ | दानां | दार्नी |
| ८५ | ८ | तूद्दश | तूद्देश |
| ९३ | १५ | साध्यविशि | साध्याविशि |
| १०१ | १० | वहिष्टेषु | बहिष्ठेषु |
| १०६ | २२ | जन्य ऐन्द्रिय | जन्यमैन्द्रिय |
| १०९ | ७ | स्येन्द्रिय | स्यैन्द्रिय |
| ११४ | ११ | सर्वबुद्ध्य | सर्वबुद्ध्यु |
| ११६ | ८ | अभावोभाव | अभावो न भाव |
| ११८ | ७ | मोक्षश्चद्धा | मोक्षश्चाद्धा |
| १२४ | १७ | स्पर्शन | स्पार्शन |
| १२५ | १४ | पल्ल | पड्‌ल |
| १२५ | १६ | सूत्रकारात्त | सूत्रकारोक्तं |
| १२५ | १६ | नन्वी | नन्वि |
| १२९ | १४ | चारत | चरित |
| १३० | २१ | प्रादु | प्रादुः |
| १३३ | २२ | भावाभाव | भाभाव |
| १३४ | १५ | भावमेव | अभावमेव |
| १३४ | २१ | सिद्धेर्भाव | सिद्धेरभाव |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १३५ | १० | भूर्विकारत्वात् | भूविकारत्वात् |
| १३५ | ११ | भूर्विकारत्वम् | भूविकारत्वम् |
| १३५ | १४ | स्वाथकथन | स्वार्थकथन |
| १३७ | १७ | इनलनव | इननव |
| १३८ | १६ | पल्ल | पड्न |
| १३९ | १ | यत् | यतः |
| १४१ | ४ | कट्टिप्ता | कट्टिप्ता |
| १४३ | १२ | ध्यंभि | ध्याभि |
| १४५ | ७ | पेलाया | पेलया |
| १४६ | २१ | रूपं करोत्यर्थंभूत | रूप करोत्यर्थभूता |
| १४६ | २२ | प्रथमलिङ्गा | प्रथमात्मिका लिङ्गा |
| १६४ | १४ | वर्तरयन्ति | वर्तनयन्ति |
| १६४ | २२ | गतत्वा | गता त्वा |
| १६५ | २७ | न्येनामह् | न्येन मह् |
| १६६ | २१ | कोटीत्यर्थः | करोतीत्यर्थः |
| १७१ | २० | मर्यन | मंत्र न |
| १७२ | १२ | मकर्त्तृ | कर्त्तृ |
| १७५ | ६ | स्यानिष्ट | स्यानिष्ठ |
| १७५ | १० | इति । वदते | इति वदते |
| १७६ | ८ | मिद्दु | मिद्दुं |
| १७६ | २३ | समाप्तौ | सम्माप्तौ |
| १८७ | ५ | लकत्वमिल | कृतकत्वमि |
| १९३ | १७ | न भवति | न प्रभवति |
| १९४ | १४ | कारणानां | करणानां |
| २०२ | १६ | सिद्धं | सिद्धान्त- |
| २१३ | १६ | जिगीपवो | जिगीषो |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| २१५ | १७ | तस्या | तस्याः |
| २१६ | २० | शङ्का | शङ्को |
| २२० | ८ | हतु | हेतु |
| २२२ | १९ | निर्णयाथ | निर्णयार्थ |
| २३१ | ७ | जाननस्य | जानानस्य |
| २३२ | १६ | स्तनु | तदनु |
| २३७ | ११ | यथाऽनित्यः | यथा नित्यः |
| २४१ | १९ | साधर्म्यवैधर्म्यसम | साधर्म्यसमवैधर्म्यसमेति |
| २४३ | १८ | अजाती | जाती |
| २४३ | १९ | नन्तरभा | नन्तर्भा |
| २४३ | २० | लक्षणेक | लक्षणैका |
| २४४ | १६ | ल्लक्षणप | ल्लक्ष्यलक्षणप |
| २४४ | १७ | समाहत्य | समाहृत्य |
| २४४ | १८ | दूषणासक्तं | दूषणाशक्तं |
| २४४ | १८ | सह उक्त | स्हदुक्त |
| २४५ | २० | नाचिक्षेत | नाचिकेत |
| २४५ | २१ | गमादनित्यः | गमात् नित्यः |
| २४६ | २० | साध्यसिद्धे- | साध्यसिद्धि- |
| २४७ | १५ | कर्तृमत्वे | कर्तृमत्त्वे |
| २४७ | १८ | तस्मात् | न तस्मात् |
| २४९ | १९ | शब्दनित्य | शब्दानित्य |
| २४९ | २० | साध्यपक्ष इति | साध्यापकर्षेति |
| २४९ | २४ | सिद्धत्व | ऽसिद्धत्व |
| २४९ | २४ | मारोप्य | मारोप्यम् |
| २४९ | २४ | उत्कर्षसमव | उत्कर्षसमाव |
| २६० | १९ | असिद्धार्थे | सिद्धार्थे |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| २६० | २२ | वत्पक्षो | वत्सपक्षो |
| २६१ | ११ | त्वव्याघातः | स्वव्याघातः |
| २६१ | २२ | द्विप्रति | द्विति प्रति |
| २६२ | ३ | तदासाध्य | तदाऽसाध्य |
| २६२ | १० | ह्वेतुमत्त्वे | हेतुमत्त्वे |
| २६३ | २२ | साध्यासाद्धः | साध्यसिद्धिः |
| २६७ | १४ | दोषस्या | दोषश्चा |
| २७१ | १० | प्राप्ता | अप्राप्ता |
| २७१ | १७ | व्याप्त्या | व्याप्त्यादि |
| २७३ | १६ | इति मित्ते | इति निमित्ते |
| २७४ | ५ | सिद्धिमात्र | सिद्धमात्र |
| २७५ | २२ | ज्ञापकत्वा | ज्ञापकत्वाद् |
| २७६ | १२ | प्रतिपधो | प्रतिषेधेऽ |
| २७७ | २२ | केनचिद्भा | केनचिद्दंभा |
| २८१ | १८ | प्रतिपत्त्या | प्रतिपत्त्यादि- |
| २८३ | १० | धर्मसमानो | धर्मसमातो |
| २८४ | ६ | योनित्वेन | योगित्वेन |
| २८४ | ६ | साध्याभावे | सत्ताभावे |
| २८४ | १३ | त्रिकाल्या | त्रैकाल्या |
| २८८ | २१ | पादनात्मकधर्मः | पादनार्थम् |
| २९६ | ५ | तादूपेण | तादूप्येण |
| २९८ | १ | लब्धो | लब्धे |
| २९८ | १५ | धमापपत्ते | धर्मोपपत्ते |
| ३०३ | ८ | प्रतिषेध्य | प्रतिषेध्ये |
| ३०३ | २२ | साध्यभाने | साध्यमाने |
| ३१२ | १७ | वादिनोः स | वादिनोऽस |

असतो ज्ञानं प्रति हेतुत्वायोगादिति चेत् । एवं सति सर्वसंविदां स्वात्मन्यप्रत्यक्षत्वप्रसङ्गः । स्वात्मनि स्वस्य हेतुत्वायोगात् स्वविषयत्वानभ्युपगमाच्च । स्वकालविशेषितार्थावभासित्वमिति चेत् । तर्हि निर्विकल्पकस्य सर्वसंविदां स्वात्मात्मनोरप्रत्यक्षत्वापातः ।

न चतुर्थः । तत्र यदि वस्तुस्वरूपं साक्षादित्यु-

---

इत्यर्थः । ज्ञानं प्रति हेतुत्वमेव अत्र नियामकं तच्च प्रत्यक्ष एव सम्भवति नान्यत्रेति भावः । अन्यत्रासम्भवे कारणमाह । असत इति । भूतभाव्यनुमानादिविषयभूतार्थस्य तत्कालासत्त्वेन हेतुत्वादित्यर्थः । अथ सिद्धान्ती प्रव्यक्ताभिसन्धिरव्याप्त्या दूषयति । एवं सतीति । कुत इत्याशङ्क्य स्वोक्तनियामकाभावादित्याह । स्वात्मनीति । विषयत्वादेव हेतुत्वमित्याशङ्क्य तदपि नास्तीत्याह । स्वविषयत्वेति । तदभ्युपगमे त्वात्माश्रयः स्यादिति भावः । विशिष्टपक्षमाशङ्कते । स्वकालेति । अत्राप्यव्याप्तिमाह । तर्हीति । निर्विकल्पकस्याविशिष्टविषयत्वाद् ज्ञानात्मनोः स्वमते विषयतयानवभासाच्च[१] तेषु कालविशिष्टार्थावभासकत्वमव्याप्तमित्यर्थः ।

अथ चतुर्थपक्षोपन्यासोऽपि व्यर्थ इत्याह । न चतुर्थ इति । कुतो नेत्याशङ्क्य यदेतत्प्रतीतेः साक्षात्त्वं नाम पदार्थस्वरूपविषयत्वमित्यात्थ तत् किं पदार्थमात्रस्वरूपविषयत्वं साक्षाद्भूतपदार्थस्वरूपविषयत्वं वा । आद्ये ऽनुमानादावतिव्याप्तिरित्यास्तां तत् । द्वितीये तु साक्षाद्भूतपदार्थ एव स्वरूपमात्मा तद्विषयत्वं वा उत साक्षाद्भूतप-

---

(१) विषयत्वानवभासाच्च—पा॰ E पु॰ ।

क्ता तद्विषया संवित् साक्षादित्य[1]भिधीयते । ततः प्रत्यक्षसमानविषया स्मृतिरपि तथा स्यात् । यदि स्वस्य रूपं स्वरूपमिति जात्यादिधर्मभेदप्रतीतिः । तर्ह्यनुमानादेरपि तथात्वं प्रसज्येत । यदा स्वस्यैव

दार्थं यत् स्वरूपमित्यनवधारितषष्ठीसमासाश्रयणात् तन्निष्ठसामान्यादिसाधारणधर्मस्तद्विषयत्वं वा अथवा स्वस्यैव रूपमित्यवधारणात् तन्निष्ठासाधारणधर्मस्तद्विषयत्वं वा स्वमेव रूपमिति सावधारणकर्मधारयाश्रयणान्नामाद्यविशिष्टापरोक्षवस्तुविषयत्वं वा यद्वा स्वरूपशब्दस्य प्रतीत्यन्तरसंस्पर्शनिषेधपरत्वमाश्रित्याज्ञातचरसाक्षाद्भूतवस्तुविषयत्वं वेति पञ्चधा विकल्प्याद्यमनुवदति। तत्र यदीति। साक्षात्त्वस्य विषयधर्मतामाह। वस्तुस्वरूपं साक्षादित्युक्त्वेति। सर्वविकल्पशेषं चैनत् । अत्र वस्त्वेव स्वरूपमात्मेति विग्रहार्थः स्वरूपशब्दश्चात्र रूढवृत्तिः। तथा च साक्षाद्भूतपदार्थस्वरूपविषयत्वं[2] साक्षात्त्वमित्यर्थः । एतत्प्रत्यक्षानुभवजन्यस्मृतावतिव्याप्तमित्याह । तत इति । द्वितीयमनुवदति । यदि स्वस्येति । आदिशब्दात् संख्यादिसंग्रहः । अत्र प्रतीतेः साक्षाद्भूतवस्तुनिष्ठसाधारणधर्मविषयत्वं साक्षात्त्वमित्यर्थः। अस्य धूमानुमानादावतिव्याप्तिरित्याह । तर्हीति। अत्रादिशब्दात् स्मृतेरपि संग्रहः। तृतीयमनुभाषते । यदा स्वस्यैवेति । साक्षाद्भूतवस्तुनिष्ठासाधारणधर्मविषयत्वं साक्षात्त्वमित्यर्थः । इदं तावदयं स्वरो मत्पुत्रीयः विशिष्टस्वरत्वात् पूर्वानुभूतैत-

(१) साक्षात्प्रतीतिरित्य–पा॰ C पु॰ ।

(२) वस्तुविषयत्व -पा॰ E पु॰ ।

रूपं स्वरूपमित्यसाधारणधर्मप्रतीतिः[1] तदा पुत्त्रादिस्वराद्यनुमानेऽतिव्याप्तिः[2] न व्याप्नोति च साधारणधर्मदर्शनम् । अथ स्वयमेव रूपं स्वरूपं रूप्यतेऽनेन संविदिति च रूपम् । तेन या स्वरूपेण स्वात्मना वस्तु विषयीकरोति सा साक्षात्प्रतीतिः नैवमनुमानादिरिति चेत् । तर्हि सविकल्पकस्याप्रत्यक्षत्वप्रसङ्गः[3] । तत्र नामादिरूपेण विषयीकरणात् ।

स्वविषयान्तर्गतप्रतीत्यन्तराव्यवहितत्वं स्वरू-

---

त्स्वरदेवेत्याद्यसाधारणधर्मानुमानेऽतिव्याप्तमित्याह । तदा पुत्त्रादीति । आदिशब्दाद्भ्रात्रादिसंग्रहः । स्वरादीत्यादिशब्दाद्देशभाषादिसंग्रहः । अथ सङ्ख्यादिसाधारणधर्मप्रत्यक्षेष्वव्याप्तिश्चेत्याह । न व्याप्नोति चेति ।

चतुर्थमाशङ्कते । अथ स्वयमेवेति । नन्वेकस्यैव कथं धर्मधर्मिभाव इत्याशङ्क्य रूपशब्दं च निरुक्तिभेदेन धर्मिपरत्वेन व्याचष्टे । रूप्यत इति । तथा च रूपमिति निरूपकमित्यर्थः । फलितमाह । तेनेति । स्वरूपशब्दस्य पूर्वोक्तनिरुक्तिसिद्धार्थमाह । स्वात्मनेति । अविशिष्टाकारेणेति यावत् । इत्थम्भावे तृतीया । तथा च यद्वस्तु यथाभूतं तत्तथैवोल्लिखति न तु विशिष्टमित्यर्थः । एतेन नामाद्यविशिष्टसाक्षाद्भूतवस्तुविषयत्वं साक्षात्त्वमिति सिद्धम् । तथा च पूर्वोक्तातिव्याप्तिर्निरस्तेत्याह । नैवमिति । अनुमानस्य विशिष्टविषयत्वादिति भावः । तर्हि मूले कुठार इत्याह । तर्हीति ।

---

(१) धर्मभेदप्रतीतिः—पा॰ C पु॰ ।

(२) अतिव्याप्नोति—पा॰ B पु॰ ।

(३) प्रसक्तिः—पा॰ B पु॰ ।

पप्रतीतित्वमित्ययं पक्षः स्मृतेः स्वात्मात्मनोरप्रत्य-क्षत्वापातेन निरस्त एव ।

न पञ्चमः । पुत्रादिविषयस्वराद्यनुमाने ऽति-व्याप्तेः । सजातीयविजातीयसमस्तवस्तुदर्शनाशक्ते-स्तद्व्यावृत्तप्रत्ययासम्भवाच्च । वस्तुतो व्यावृत्तविषय-त्वमात्रेण प्रत्यक्षत्वे ऽनुमानादेरपि तथात्वं स्यादिति ।

नापि षष्ठः । निर्विकल्पकसापेक्षमेव विक-ल्पेन विकल्पितरूपग्रहणमिति विकल्पस्याप्रत्यक्षत्व-प्रसङ्गात् । उत्पत्तावेव विकल्पस्य तदपेक्षा न

---

पञ्चमोऽप्यव्याप्तिग्रस्त इत्याह । स्वविषयेति । अत्र स्वरूपशब्देनाज्ञातचरत्वं विवक्षितं तच्च स्मार्तयोरात्मस्वा-त्मांशयोः प्रत्यक्षाभिमतयोरनुभवपूर्वकयोरव्याप्तमित्यर्थः।

अथ पञ्चमं दूषयति । न पञ्चम इति । अत्र वस्तुनः समस्तवस्तुव्यावृत्तिर्ज्ञाततया विशिष्यते सत्तया वा । आद्ये ऽपि किं ज्ञातुं शक्यते वा न वा । आद्येऽतिव्याप्तिरि-त्याह । पुत्रादीति । विषयशब्दः सम्बन्धिवचनः गतम-न्यत् । द्वितीये त्वसम्भव इत्याह । सजातीयेति । सत्ता-पक्षे त्वतिव्याप्तिरित्याह । वस्तुत इति ।

अथ षष्ठोऽप्यपद्वित्याह । नापीति । ननु कथं तस्या-पटुत्वं वस्त्वन्तरेत्यादिविशेषणेन पूर्वोक्तपुत्रादिस्वरानु-माने स्वगृहीतेत्यनेन स्मृतौ चातिव्याप्तेर्दृष्टेत्यनेन प्रागुक्ता-सम्भवस्य च निरासादित्यत आह[१] । निर्विकल्पकेति । विकल्पितेति विशिष्टेत्यर्थः । उक्ताव्याप्तिपरिहारमाश-ङ्कते । उत्पत्ताविति । तर्हि पूर्वोक्तातिव्याप्तिर्न मुञ्चति ।

(१) दित्याशङ्क्याह—पा॰ E पु॰ ।

स्वविषयभेदग्रहण इति चेत् । न पुत्त्रादिविषयस्वराद्यनुमानेऽपि सुवचत्वात् । असाधारणधर्मदर्शनसापेक्षभेदप्रतीतेरप्रत्यक्षता च स्यादिति ।

निर्विकल्पकसंविदस्त्वितयव्यवहारानुगुण्याभावेन सप्तमः पक्षोऽपि न कक्षीकार्यः ।

अष्टममपि विकल्पं विकल्पयामः । किं तद्धर्मान्तरमनुमानादिसंविदामस्ति वा न वेति । यद्यस्ति तासामपि प्रत्यक्षत्वप्रसङ्गः । साक्षात्त्वविशेषणस्य व्यवच्छेद्याभावेन वैयर्थ्यं चापद्येत । यदि नास्ति तासां

---

तत्राप्यनुमितेरुत्पत्तावेव लिङ्गज्ञानापेक्षा नार्थपरिच्छेद इति सुवचत्वादित्याह । नेति । अव्याप्तिश्चापरा लगतीत्याह । असाधारणेति । स्थाण्वादिधर्मिविशेषावधारणस्य वक्रकोटरादिविशेषज्ञानापेक्षत्वेन त्वदुक्तलक्षणायोगादित्यर्थः ।

सप्तमस्तु निर्विकल्पक एवाव्याप्त इत्याह । निर्विकल्पकेति । वेद्यवेदकवित्तिस्फुरणमात्रात्मकं तत्र तद्विशेषोल्लेखिव्यवहारानुगुण्यायोगादिति भावः ।

अष्टमस्तु कष्टादपि कष्ट इत्याशयेनाह । अष्टममपीति । विकल्पयति । किं तदित्यादि । तस्य स्वरूपं यद्वा तद्वास्तु किं तु तदितराव्यावृत्तं तदितरव्यावृत्तं वा तावदेव ब्रूहीति भावः । अव्यावृत्तिपक्षेऽतिव्याप्तिरित्याह । यद्यस्तीति । किं चास्मिन् पक्षे साक्षात्प्रतीतिरित्यत्र विशेष्यवद्विशेषणस्यापि सर्वसंवित्साधारणत्वे विशेषणवैयर्थ्यं च स्यादित्याह । साक्षात्त्वेति । द्वितीये त्वव्याप्तिरित्याह । यदि नास्तीति । व्याकोपो हानिः । तत्रापि तदभावादिति

स्वात्मात्मनोरपि प्रत्यक्षताव्याकोपः स्यादिति कृतं विस्तरेण । अनतिभेदा अप्येते पक्षभेदा मन्दमतीनां विभ्रमो माभूदिति पृथगुपन्यस्य निरस्ता इति ।

अनधिगततथाभूतार्थनिश्चायकं प्रमाणमिति मीमांसाचार्याः । यथाहुः ।

---

भावः । नन्वज्ञानकरणत्वे सत्यनुभूतित्वं तद्भविष्यति तच्चेतरव्यावृत्तमेवेत्याशङ्क्य ज्ञानकरणानामनुमानादिसंविदां स्मृतेश्चाननुभूतेरात्मस्वात्मांशयोरव्याप्तिं किं न पश्यसीत्याशयेनाह । कृतमिति । निषेधार्थे ऽव्ययमेतत् । विस्तरेण साध्यं नास्तीत्यर्थः । गम्यमानसाधनक्रियां प्रति करणत्वात् तृतीया । तदुक्तं न्यासोद्द्योतेन । न केवलं श्रूयमाणैव क्रिया निमित्तं करणभावस्य अपि तु गम्यमानापीति स्फुटीकृतं चैतदस्माभिः पञ्चकाव्यादिटीकासु अलं महीपाल तव श्रमेण[1]त्यादौ । ननु विस्तरमनिच्छतो किमनेनातिविलक्षणबहुपक्षोपन्यासेन दिङ्मात्रप्रदर्शनेनापि सुगमत्वादित्याशङ्क्य मन्दानुग्रहार्थमित्याह । अनतिभेदा इति । अत्यन्तभेदरहिता अपीत्यर्थः । इतिशब्दः समाप्तौ ॥

तदेवं गुरुमतं निरस्येदानीं परमगुरुभट्टपादमतं निरसितुं तत्सङ्ग्राहकमज्ञातचरेत्यादिश्लोकमर्थतो व्याचष्टे । अनधिगतेत्यादि । तथाभूतो ऽन्यथात्वमप्राप्त इत्यर्थः । निश्चायकं निश्चयकरणमित्यर्थः । करणे कर्तृत्वोपचारात् ण्वुल्प्रत्ययः । क्रमात् पदत्रयेण स्मृतिविपर्ययतर्कसंशयानां व्यवच्छेदः । संग्रहस्यापरशब्दार्थ[2]माह । मीमांसाचार्या इति ।

---

(१) रघुवंशे २ सर्गे ।

(२) प्रकारिकास्यस्यापरशब्दस्यार्थम् ।

तस्माद् दृढं यदुत्पन्नं न विसंवादमृच्छति ।
ज्ञानान्तरेण विज्ञानं तत्प्रमाणं प्रतीयताम् ॥ इति ।
तदपि न चतुरस्रमिव दृश्यते ।

यादृच्छिकसंवादिनां दुष्टेन्द्रियाणां बाष्पादिविषयधूमादिलिङ्गविभ्रमाणां भ्रान्तविप्रलम्भकवाक्यानां च प्रामाण्यापत्तेः । सकलवेदाप्रामाण्यप्रसङ्गाच्च यत्र क्वचन जन्मनि वेदार्थस्य सर्वैरधिगतत्वेनानधिगतपूर्वकत्वाभावात् । अधिगतत्वसन्देहे ऽपि

---

अत्र कारिकां संवादयति । यथाहुः तस्मादिति । प्रागुक्तरीत्या प्रामाण्यस्य गुणसंवादार्थक्रियाज्ञानादिपरानपेक्षत्वादित्यर्थः । दृढमवधारणात्मकम् तेन तर्कसंशययोर्व्युदासः । उत्पन्नं प्रथमोत्पन्नमनधिगतार्थगोचरमित्यर्थः । तेन स्मृत्यनुवादयोर्निरासः । अथवा उत्पन्नमित्यनेनानुत्पत्तिलक्षणाप्रामाण्यनिरासः । न विसंवादमृच्छति ज्ञानान्तरेणेति विषयतथाभाव उक्तस्तेन विपर्ययपर्युदासः । विज्ञायते ऽनेनेति विज्ञानमिन्द्रियलिङ्गादि यद्विज्ञानकरणं तत्प्रमाणमिति प्रत्येतव्यमिति कारिकार्थः । तदेतत्सविनयसङ्कोचमिव निराचष्टे । तदपीति । चतस्रो ऽस्रयो यस्य(१) तच्चतुरस्रं समीचीनमित्यर्थः । सुप्रातसुश्वेत्यादिना समासान्ते निपातः ।

कुत इत्याशङ्क्यातिव्याप्तेरित्याह । यादृच्छिकसंवादिनामिति । कदाचित् तथाभूतार्थानामित्यर्थः । किंच किं जन्मान्तरे ऽप्यनधिगतत्वमिष्टमेतस्मिन्नेव वा । आद्ये त्वव्याप्तिरित्याह । सकलेति । ननु जन्मान्तराधिगतिः सन्दि-

---

(१) अस्रयो ऽस्य—पा॰ E पु॰ ।

प्रामाण्यानिश्चयात् । एकस्मिन् जन्मन्यनधिगतपूर्वत्वं तत्त्वमिति चेत् । न तत्रैवाधिगतविस्मृतवेदार्थानां पुरुषाणां वेदाप्रामाण्यप्रसङ्गात् । न तत्राधिगतत्वप्रतिसन्धानमस्तीति चेत् । न अनुवादकवाक्यानां स्मृतिप्रमोषाणां प्रामाण्यापातात् । अधिगतविषयाणां चाप्रामाण्ये नानाशाखागतान्येकार्थगोचराणि वाक्यान्यप्रमाणं भवेयुः । न च तेषां प्रतिपत्तृव्यवस्थयाऽनधिगतत्वं वाच्यम् न चैकं प्रति शिष्यत[१]

ग्धेत्याशङ्क्याह । अधिगतेति । द्वितीयं शङ्कते । एकस्मिन्निति । तथाप्यव्याप्तिरस्तीति परिहरति । न तत्रैवेति । तर्हि ज्ञातं सदप्रामाण्यकारणमधिगतत्वं न सत्तामात्रेणेति शङ्कते । न तत्राधिगतत्वेति । तर्ह्यतिव्याप्तिरित्याह । नेति । योऽश्वमेधेन यजत इत्यादीन्यनुवादवाक्यानि जातमात्राणां च जन्मान्तरानुभूतस्तनपानेष्टसाधनतास्मृतयस्तत्रांशप्रमोषात् स्मृतिप्रमोषा उच्यन्ते । तेष्वधिगतत्वप्रतिसन्धानाभावात् प्रामाण्यापत्तिरित्यर्थः । किं च एवं प्रतिशाखमाम्नातेषु ज्योतिष्टोमादिवाक्येष्वनधिगतार्थत्वासम्भवादव्याप्तिः स्यादित्याह । अधिगतेति । तत्तच्छाखिनामेव तानि बोधकानीति नियमाङ्गीकारान्नायं दोष इत्याशङ्कामनूद्य निरस्यति । न चेति । कुतो न वाच्यमित्याशङ्क्य शाखान्तराधिकरणसिद्धान्तन्यायविरोधादित्याह । न चैकं प्रतीति । न ह्येकस्यां शाखायामाम्नातमग्निहोत्रादिकं कर्म एकं तच्छाखाध्यायिनं प्रत्येव शिष्यत उपदिश्यते किं तु विशेषाश्रवणात् सर्वानेव शाखिनः प्रतीति सूत्रार्थः । स च

(१) प्रति क्रियत—पा॰ C पु॰ 1

इति न्यायात् । सर्वशाखाविहितेतिकर्तव्यताकलापोपसंहारसमर्थनेन सर्वेषां सर्वत्र प्रामाण्याभ्युपगमात् किंनिबन्धनश्चाधिगतविषये प्रद्वेषः । किं तत्राधिगत्यन्तरानुत्पत्तेः उत्पत्तावपि वानपेक्षितत्वात् पूर्वाविशिष्टत्वाद्वा । न प्रथमः । सामग्र्यप्रतिबन्धेन प्रमिते ऽपि प्रमान्तरोत्पत्तिदर्शनात् । न द्वितीयः ।

प्रतिपत्तृव्यवस्थाश्रयणे विरुद्ध्यत इत्यर्थः । तथाप्यनङ्गीकारे ऽभ्युपगमविरोधश्च स्यादित्याह । सर्वशाखागतेति । शाखान्तरे कर्मभेदः स्यादित्यत्र कस्याञ्चिच्छाखायामाम्नातमग्निहोत्रदर्शपूर्णमासादिकं कर्म शाखान्तराम्नाताद्भिन्नमभिन्नं वेति विचार्य्य न्यूनाधिकाङ्गतया श्रवणाद्भिन्नमेवेति प्राप्ते ऽनुक्तमन्यतो ग्राह्यमिति न्यायेन सर्वाङ्गोपसंहारात् सर्वशाखाप्रत्ययमेकं कर्मेति सिद्धान्तकरणादित्यर्थः । तदेवमनधिगतार्थत्वं न प्रामाण्ये प्रयोजकं विरोधादित्युक्तम् । सम्प्रति तद्व्यावर्त्यमधिगतार्थत्वमप्रामाण्ये न प्रयोजकं विरोधादिति वक्तुं पृच्छति । किंनिबन्धनश्चेति । प्रद्वेषः प्रामाण्यासहनमित्यर्थः । ननु दुर्घटार्थे किं पक्षपातेनापीत्याशङ्क्य दौर्घट्यमेव कुत इति त्रेधा विकल्पयति । किं तत्रेति । ध्वस्तस्य पुनर्ध्वंसवत् ज्ञातस्य पुनर्ज्ञानान्तरानुत्पत्तेरप्रामाण्यम् उत उत्पन्नस्यापि भुक्तभोजनवत् अनपेक्षितत्वाद्वा अपेक्षितस्यापि दीपवर्तिदेशे दीपान्तरवत् कार्यतः स्वरूपतो विषयतः प्रमातृतो वा विशेषाभावाद्वेत्यर्थः । आद्यं परिहरति । न प्रथम इति । कुतो नेत्यत आह । सामग्रीति । सामग्रीसद्भावासद्भावनिबन्धने हि ज्ञानोत्पत्त्यनुत्पत्ती न त्वधिगतत्वानाधिगतत्वनिबन्धने इत्यर्थः ।

प्रमात्रपेक्षानधीनत्वात् प्रामाण्यस्य । अन्यथा उपेक्षादिफलानामप्रामाण्यापातात् । न तृतीयः । उत्तराविशिष्टत्वेन पूर्वप्रामाण्यस्यापि सुवचत्वात् । अविशेषे ऽपि तदनपेक्षत्वेन तस्य प्रामाण्यमिति चेत् । तुल्यमितरत्रापि । अधिगतविषयस्यापि प्रामाण्ये स्मृतिहेतोरपि तथात्वप्रसङ्ग इति चेत् । न स्मृतेरननुभवत्वेनाप्रमाणत्वात् । याथार्थ्यमेव प्रमात्वनिमि-

---

दर्शनादिति । प्रत्यक्षदृष्टस्य दुरपह्नवत्वादित्यर्थः । प्रामाण्यस्य पुरुषाकाङ्क्षानिबन्धनत्वे ऽनिष्टमाह । अन्यथेति । आदिशब्दाद् द्वेषजुगुप्सादिसंग्रहः । अत्र प्रमाणविशेषाणामिति शेषः । यदि पूर्वस्योत्तराविशेषे ऽप्युत्पत्तौ विषयपरिच्छेदे वानुत्पन्नोत्तरानपेक्षत्वात् प्रामाण्यं तर्ह्युत्तरस्यापि पूर्वाविशेषे ऽप्युत्पत्तिविषयपरिच्छेदयोर्नष्टपूर्वानपेक्षितत्वात्(१) प्रामाण्यं दुर्वारमिति समः समाधिरित्याह । तुल्यमितरत्रापीति । ननु यद्येवमधिगतार्थत्वमप्रामाण्ये हेतुर्न स्यात् जितं तर्हि संस्कारेणेति शङ्कते । अधिगतेति(२) । यथार्थानुभवकरणत्वं प्रामाण्ये व्यापकं तदभावादप्रामाण्यं संस्कारस्य न त्वधिगतार्थत्वादिति परिहरति । नेति । अप्रमाणत्वादित्यतः प्राक् तत्साधनसंस्कारस्येति पूरणीयम् । तर्हि यथार्थज्ञानकरणत्वमेव प्रामाण्ये प्रयोजकमस्तु किमनुभवत्वेन । अस्ति च याथार्थ्यं स्मृतेरपि समानतन्त्रे प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणेति विद्याप्रभेदेषु भाष-

---

(१) नपेक्षत्वात्—पा॰ E पु॰ ।

(२) अधिगतविषयस्य ज्ञातार्थविषयस्य स्मृतिहेतोः संस्कारस्य ।

त्तमस्तीति चेत् । न स्मृतिहेतोः संस्कारस्य महर्षिभिः प्रमाणत्वेनापरिसङ्ख्यानात् । नाप्युक्तेष्वन्तर्भावः । असाक्षात्कारिफलत्वेनाप्रत्यक्षत्वात् । सत्तामा-

---

णादित्याशयेन शङ्कते । याथार्थ्यमेवेति । तर्हि किमस्य प्रत्यक्षादिवत् पृथक् प्रमाणत्वमिष्टमर्थापत्त्यादिवदन्तर्भावो वेति द्वेधा विकल्प्य नाद्यः प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्यादौ सूत्रकारैः प्रत्यक्षादिवत् संस्कारस्य पृथगनुद्देशादित्याह । नेति । न च द्वितीय इत्याह । नापीति । कुत इत्याशङ्क्य न तावत् प्रत्यक्षे ऽन्तर्भवति संस्कारः तल्लक्षणरहितत्वादनुमानादिवदित्याह । असाक्षात्कारीति । नाप्यनुमानादौ अज्ञातकरणत्वात् प्रत्यक्षवदित्याह । सत्तामात्रेणेति । न च तल्लक्षण[1]बलादेव संस्कारे ऽपि प्रामाण्यव्यवहारः प्रवर्तयितव्य इति वाच्यम् लोकसिद्धे व्यवहारे निमित्तान्वेषणमात्राधिकारिणां परीक्षकाणां न स्वोत्प्रेक्षाकल्पितलक्षणैर्व्यवहारोऽन्यथाकरणशक्तिविरहात् । तस्माद् यथार्थापि स्मृतिरननुभवत्वादप्रमा न त्वधिगतार्थत्वादिति स्थितम् । ननु कोऽयं नियमो ऽयथार्थाप्यनुभूतिरेव प्रमा न तु स्मृतिरिति सत्यम् । विषयपरिच्छेदे निरपेक्षत्वादनुभूतिरेव प्रमा न तु स्मृतिर्नित्यमनुभवपारतन्त्र्यात् । तदुक्तमाचार्यैः ।

यथार्थानुभवो मानमनपेक्षतयेष्यते । इति ।

अस्तु वा यथार्थज्ञानकरणमित्येव प्रमाणलक्षणं तथाप्ययथार्थत्वादेवाप्रामाण्यं स्मृतेर्नाधिगतार्थत्वादिति वक्तुं

---

(१) 'यथार्थज्ञानकरणत्वमिति ।

न्त्रेण बोधकत्वेनानुमानाद्यनन्तर्भावाच्च । न च याथार्थ्यमपि स्मृतेरस्ति । न हि यदा यादृशोऽर्थः स्मर्यते तदा तादृशोऽसौ पूर्वावस्थाया निवृत्तत्वात् । न च निवृत्तपूर्वावस्थतया स्मृतिरालम्बते तथाननुभूतत्वात्। तेन समानविषयत्वे ऽपि स्मृत्यनुभवयोरनुभवकाले ऽर्थस्य तादवस्थ्यात् स्मृतिकाले त्वतादवस्थ्यादेकस्य याथार्थ्यमन्यस्यायथार्थत्वमप्युपपद्यत एव । पूर्वं तदवस्थमित्युक्तस्त्रापि याथार्थ्ये पाकरक्ते ऽपि श्यामताप्रत्ययो यथार्थः स्यात् । तेनायथार्थस्यापि यथार्थानु-

---

याथार्थ्यमेव निराचष्टे । न चेति । कुत इत्यत आह । न हीति । यदवस्थोऽनुभूयते तदवस्थ एव स्मर्यते सा चावस्था स्मृतिकाले नास्तीत्यसद्विषयत्वादयथार्था स्मृतिरित्यर्थः । ननु यावदस्ति तावदेव स्मर्यताम् अस्ति च निवृत्तपूर्वावस्थं वस्तु स्मृतिकाले ऽतो यथार्था स्मृतिरित्याशङ्क्याननुभूतार्थस्मरणापत्तेर्नैतद्युक्तमित्याह । न चेति । ननु तयोः समानविषयत्वे कथमनुभवस्य याथार्थ्यं स्मृतेस्त्वयाथार्थ्यं व्याघातादित्याशङ्क्याह । तेन समानेति । ननु स्मृतिकाले ऽपि भूतपूर्वगत्या वस्तुनस्तादवस्थ्याद् याथार्थ्यं स्मृतेरित्याशङ्क्यातिप्रसङ्गान्नेत्याह । पूर्वमिति । पाकरक्ते घटादौ भौतपूर्व्यात् श्यामोऽयमिति प्रत्ययोऽपि यथार्थः स्यादित्यर्थः । कथं तर्हि काणादैर्विद्यात्वेनोक्तिरित्याशङ्क्य कार्ये कारणधर्मोपचारादित्याह । तेनायथेति । फलं तूपचारस्य परोक्तमनधिगतार्थत्वप्रयुक्तमविद्यात्वं नास्तीति सूचनमित्यनुसन्धेयम् । अथ तेषामपि मुख्यमेव स्मृतेर्विद्यात्वमित्यभिमानः तर्हि प्रमाणपथातिक्रमे ते ऽपि नः परिहार्या एवेत्यलं सुहृदनु-

भवजनितत्वेन यथार्थत्व[1]व्यपदेश इति याचितकमण्डनकमनीयमेव स्मृतेर्याथार्थ्यम् । किं चास्मिन् पक्षे धारावाहिकद्वितीयादिबुद्धयो न प्रमाणं भवेयुः[2] । न च तत्तत्कालकलाविशेषाकलितवस्तुनिर्भासिना-

रोधेन । ननु काशकुशवदौपचारिकमपि क्वचिदुपयुज्यत इत्याशङ्क्य सत्यमदृष्टार्थेष्वगतया तथास्तु दृष्टार्थेषु न तथेति दृष्टान्ततो निराचष्टे । याचितकेति । याचितकमण्डनवदस्थिरत्वादप्रयोजकमित्यर्थः । याञ्चया लब्धं याचितकम् अपमित्ययाचिताभ्यां कक्कनाविति कक्प्रत्ययः । ननु स्मृतेरयथार्थत्वे यथार्थानुभवः प्रमेत्यादौ यथार्थपदेनैव स्मृतिव्यवच्छेदादनुभवग्रहणं किमर्थम् सत्यम् अनुभवत्वैकनियतं याथार्थ्यमिति सूचनार्थम् ज्ञानत्वसाधर्म्यात् स्मृतिरप्यनुभूतिरेवेति भ्रान्तिनिवारणार्थं च न च स्मृतिव्यवच्छेदार्थमिति सन्तोष्टव्यम् । कथं तर्हि स्मृतेरननुभवत्वेनाप्रमाणत्वादित्युक्तं प्रागभ्युपगम्यवादेनेति रहस्यम्[3] । एतच्च ग्रन्थकृतैव स्पष्टीकृतं न्यायकुसुमाञ्जलिटीकायामित्यास्तां तावत् । तदेवं प्रामाण्याप्रामाण्ययोरधिगतानधिगतार्थत्वे न प्रयोजके इत्युक्त्वा पुनश्चानधिगतार्थत्वमेवाव्याप्त्यन्तरेण दूषयति । किं चेति । अविच्छिन्नैकार्थगोचरानेकबुद्धिप्रवाहे द्वितीयादिबुद्धिष्वनधिगतार्थत्वासम्भवादव्याप्तिरित्यर्थः । नन्वेकस्यापि घटस्योत्तरोत्तरकालभेदाद् भिन्नतया विशिष्टभेदादनधिगतार्थत्वमस्तीति शङ्कामनूद्य निरस्यति । न चेति । कालकलाः कालैकदेशा औपाधिकाः तद्विशेषाः

(१) यथार्थता—पा॰ D पु॰ । (२) स्युः—पा॰ B D पु॰ ।
(३) त्विरस्तं रहस्यम्—पा॰ F पु॰ ।

नधिगतविषयत्वं वाच्यम् । कालाकाशदिशामरूपिद्रव्यत्वेनात्मवदचाक्षुषत्वस्य दिक्कालयोश्च विशेषगुणशून्यद्रव्यत्वेन मनोवदप्रत्यक्षत्वस्य व्यवस्थितत्वात्[१] । इयन्तं कालं घटमहमन्वभूवमित्यनुव्यवसायदर्शनात् कालभेदोऽनुभूयत[२] एवेति चेत् । तर्हीयन्तं कालं

---

क्षणलवादिभेदास्तदाकलितस्य तद्विशिष्टस्य वस्तुनो निर्भासेनेत्यर्थः । कुतो न वाच्यमित्याशङ्क्य कालविशिष्टार्थग्रहणेऽपि नागृहीतविशेषणेति न्यायेनावश्यग्राह्यस्य कालस्य किं रूपविशिष्टार्थग्रहणे रूपस्येव चाक्षुषत्वं यद्वा गन्धादिविशिष्टार्थग्रहणे गन्धादेरिवेन्द्रियान्तरप्रत्यक्षत्वं चेति विकल्प्योभयमप्यनुमानद्वयेन निरस्यति । कालाकाशेत्यादिना । अन्यथाकाशदिशोरपि प्रत्यक्षत्वापत्तिरिति तर्कसूचनाय तयोरुपादानम् हेतुद्वयेऽपि क्रमात् पदद्वयेन घटादौ रूपादौ च व्यभिचारनिरासः । उक्तहेतुद्वयस्य कालग्राहिप्रत्यक्षबाधं हृदि निधाय कालस्य प्रत्यक्षतामाशङ्कते । इयन्तमिति । ज्ञानगोचरज्ञानमनुव्यवसायः तत्रेयन्तं कालमिति कालक्रोडीकारेणैव घटानुभवस्यानुव्यवसानात्[३] घटप्रत्यक्षैर्धारावाहिभिः कालोऽपि तद्विशेषणतया गृहीत इति निश्चीयत इत्यर्थः । परमाणुमहमज्ञासिषमित्यादावप्रत्यक्षार्थेष्वनुव्यवसायदर्शनान्न तद्बलेन कालप्रत्यक्षत्वकल्पना युक्ता अन्यथा स्मृत्यनुव्यवसायबलात् स्मृतिष्वपि कालकलावभासकल्पनासौकर्यात् तास्वेवातिव्याप्तिरनिवार्या

---

(१) स्थितत्वात्–पा॰ B पु॰ ।
(२) वसीयत–पा॰ B D पु॰ ।
(३) अनुव्यवसानाद् भासनात् ।

घटमहमस्मार्षमित्यत्रापि कालभेदाधिक्येन स्मृतेरपि प्रामाण्यं स्यात् । अप्रत्यक्षत्वे कालस्यासिद्धिरेव स्यादिति चेत् । न दिग्व्यतिरेकेण परापर[1]प्रत्ययौ द्रव्यान्तरसंयोगनिमित्तौ परापरप्रत्ययत्वात् दिक्संयोगनिमित्तपरापरप्रत्ययवदित्यनुमानादेव तत्सिद्धेः । न च सूर्यपरिवृत्तिरेव निमित्तम् अविभुत्वेन तस्याः पदार्थैरसम्बन्धात् । न चात्माकाशौ वा तन्निमित्तम् घटादिवद्विशेषगुणयोगित्वेन तयोस्तन्निमित्तत्वायो-

स्यादित्याह। तर्हीयन्तमिति। ननु कालस्य प्रत्यक्षत्वानङ्गीकारे तत्साधकमानान्तराभावेनासिद्धावुक्तहेत्वोराश्रयासिद्धिरित्याशयेन शङ्कते। अप्रत्यक्षत्व इति। परिशेषानुमानात् तत्सिद्धेर्नैष दोष इत्याह । नेति । दिशा सिद्धसाधनतां[2] परिहरति। दिग्व्यतिरेकेणेति । दिक्कृतपरापरप्रत्ययविपरीतपरापरप्रत्ययावित्यर्थः । ननु सूर्यगतिसाध्ययोस्तयोः किं द्रव्यान्तरेणेत्याशङ्क्यान्यथा तस्याः परापरपिण्डसम्बन्धायोगादित्याह । न चेति । स्वाश्रयद्वारैव तत्सम्बन्धोऽस्त्वित्याशङ्क्याह। अविभुत्वेनेति। स्वाश्रयस्येति शेषः। एतेन क्षित्यादिमूर्तपञ्चकस्य दूरादेव निवृत्तिः। तर्ह्यात्मादिभिरर्थान्तरतेत्याशङ्क्याह। न चेति। न च घटादौ मूर्तत्वमुपाधिः दिशि विपरीतपरापरप्रत्ययनिमित्तत्वाभावे साध्ये सत्यपि मूर्तत्वाभावेन साध्याव्यापकत्वात् तस्या अपि तन्निमित्तत्वे प्राच्यादिव्यवहारवद्वर्तमानव्यवहारस्याप्यसाधारणत्वप्रसङ्गः । एवमपृद्रव्यप्रतिषेधे गुणा-

(१) परावर–पा॰ B पु॰ ।
(२) सिद्धसाध्यतां–पा॰ E पु॰ ।

गात् । प्रत्यक्षत्वे ऽपि कालस्य स्वतो भेदाभावात् । औपाधिकभेदस्य चोपाधीनां सूर्यगत्यादीनामनवभासे ऽवभासा(१)सम्भवान्न तद्विशिष्टवस्तुप्रतीतिः सम्भवति । प्रतिक्षणवर्तिन्यबुभुत्सितग्राह्या जिज्ञासैवोपाधिरिति चेत् । तर्हि जिज्ञासातज्ज्ञानान्तरितत्वेन

दावप्रसङ्गादष्टेतरद्रव्यपरिशेषात् स एव काल इत्यर्थः । नन्वनुव्यवसाये पूर्वज्ञानोपनीतस्य परमाण्वादेरिव चाक्षुषे स्पार्शने वा चन्दनप्रत्यक्षे घ्राणोपनीतगन्धस्येवानुमानोपनीतस्यापि कालस्य तत्सहकारादेव विशेषणतया विशिष्टधारावाहिप्रत्यक्षेषु विषयत्वसिद्धौ सिद्धं नः समीहितमित्याशङ्क्य किं सत्यं वर्तमानत्वैकाकारेण कालमात्रस्य प्रत्यक्षत्वे ऽपि तद्भेदानामतिसूक्ष्मतया दुर्लक्षत्वान्न सिद्धं नः समीहितमित्याह । प्रत्यक्षत्वे ऽपीति । कालमात्रस्येति भावः । ननु तत्प्रत्यक्षत्वे तद्भेदा अपि प्रत्यक्षा एव पृथिव्यादौ तथा दर्शनादित्याशङ्क्य किं ते पृथिव्यादिभेदवदेव स्वाभाविका मताः श्रीमतां दिगादिभेदवदौपाधिका वा । नाद्यः काललिङ्गाविशेषादञ्जसैकत्वसिद्धेस्तेषां खपुष्पकल्पत्वादित्याह । स्वत इति । नापि द्वितीय इत्याह । औपाधिकेति । आदिशब्दाच्चन्द्रगत्यादिसंग्रहः । अथावभासयोग्यं कालोपाधिमाशङ्कते । प्रतिक्षणवर्तिनीति । प्रतिक्षणमन्यान्यैव जायमानेत्यर्थः । अन्यथा तस्या अप्येकत्वे वैयर्थ्यादिति भावः । ननु तस्या अप्यज्ञाताया अनुपाधित्वात् ज्ञानस्य च पुनर्जिज्ञासापूर्वकत्वाज्जिज्ञासानवस्था स्यादित्याशङ्क्याह । अबुभुत्सितेति । परिहरति । तर्हीति । आदौ घटज्ञानं पुनर्घटजिज्ञासा ततस्तज्ज्ञानं ततस्तदुपहितकालज्ञानं ततस्तत्काल-

(१) अनवभासेनावभासा—पा॰ D पु॰ ।

घटज्ञानसन्तानविच्छेदः स्यात् स्याच्च तदुपाधिककालभेदाकलनेनैव स्मृतीनामपि प्रामाण्यम् । एतेन ज्ञाततैवोपाधिरिति निरस्तम् । तस्यां च न किञ्चित् प्रमाणं पश्यामः । ज्ञातो घटः प्रकटो घट इति विषयविशेषणत्वेन साध्यक्षमीक्ष्यत एवेति चेत् । न ज्ञान-

विशिष्टघटज्ञानमिति विजातीयव्यवधानाद् घटज्ञानधाराविच्छेदः स्यादित्यर्थः । ननु न हि स्वाङ्गं स्वस्य व्यवधायकमिति न्यायाज्जिज्ञासादीनां तदर्थतया तदङ्गत्वान्न पटादिज्ञानवद् घटज्ञानसन्तानविच्छेदकत्वमित्याशङ्क्य तर्हि तेनैव न्यायेन स्मृतीनामपि धारावाहिनीनां सुस्मूर्षातज्ज्ञानादिक्रमेणानधिगतार्थत्वसम्भवादतिव्याप्तिः स्यादित्याह । स्याच्चेति । इममेव परिहारं कालोपाध्यन्तरे ऽप्यतिदिशति । एतेनेति । तत्रापि ज्ञानस्यैवोपाधित्वाद् घटज्ञानानन्तरं ज्ञातता तज्ज्ञानं तद्विशिष्टकालज्ञानं ततस्तत्कालविशिष्टघटज्ञानं चेति क्रमे पूर्ववत् तेषां व्यवधायकत्वे सन्तानविच्छेदः अव्यवधायकत्वे स्मृतावतिव्याप्तिरित्यर्थः । एतेन ज्ञाततयैव विषयाधिक्यमित्यपि निरस्तम् स्मृतावतिव्याप्तेरिति । एतच्च ज्ञाततामङ्गीकृत्योक्तम् । अथास्या मूले कुठारं प्रयुङ्क्ते । तस्यां चेति । अस्ति तत्र प्रत्यक्षमेव प्रमाणमित्याशङ्क्याह[१] । ज्ञात इति । अत्र प्रकट इति साक्षात्कृत इत्यर्थः । तथा च ज्ञात इति सामान्यतः साक्षात्कृत इति विशेषतश्च इत्यर्थ आचार्योक्तः सिद्ध्यति । अध्यक्षमिति क्रियाविशेषणम् । तस्या अन्यथासिद्धिमाह ।

(१) शङ्कते—पा॰ E पु॰ ।

स्यैव तथा प्रतीतेः । कथमात्मसमवेतस्य ज्ञानस्य(१) विषयसामानाधिकरण्येन प्रतीतिरिति चेत् । इष्टो घटो द्विष्टो घटः प्रध्वस्तो घट इति सामानाधिकरण्यव्यवहारानालोच्य सन्तोष्टव्यमायुष्मतेति । ततश्च ज्ञानजन्यफलाश्रयत्वमन्तरेणार्थः कथं कर्मेत्यपि चोद्यं गर्भस्रावेण(२) गलितम् । इच्छादिजन्यफलान्तरस्याभावेऽपि करणव्यापारविषयत्वमात्रेण कर्मत्वोपपत्तेः ।

---

नेति । तथेति विषयविशेषणत्वेनेत्यर्थः । अन्यसमवेतस्यान्यविशेषणत्वं विरुद्धमिति शङ्कते । कथमिति । प्रतिवन्द्या समाधत्ते । इष्ट इति । अन्यथा तत्रापीष्टत्वादयो धर्माः कल्प्येरन्निति भावः । ननु ज्ञाततानङ्गीकारे परसमवेतक्रियाजन्यफलशालि कर्मेति कर्मलक्षणायोगात् कथं घटादेर्ज्ञानकर्मत्वमिति यदिह चोद्यं मीमांसकस्य तदपि खुररवेण गलमित्याह । ततश्चेति । ज्ञानमत्रपरसमवेतक्रिया परस्मिन् घटादौ साक्षात्कृत्यान्यस्मिन्नात्मनि समवेतत्वात् क्रिया चात्र धात्वर्थलक्षणा तज्जन्यफलं ज्ञातता तदाश्रयत्वमन्तरेणेत्यर्थः । इष्टो घट इत्यादौ विशेष्ये क्रियाजन्यफलाश्रयत्वं विनापि यथा कर्मत्वं तद्वदिति परिहारस्य चोद्योच्चारणसमय एव मीमांसकस्य मनसि प्रादुर्भावेनान्तरा विशरणसाम्यात् गर्भस्रावेणेत्युक्तम् । ननु तज्जन्यफलानाधारत्वेऽपि तत्कर्मत्वे घटज्ञाने पटस्यापि कर्मत्वं स्यात् नियामकाभावादित्याशङ्क्य नियामकलक्षणं स्वयमाह । करणेति । अत्र विनाश्यवदिति शेषः । यथा विनाश्यस्य घटादेर्मुद्गरप्रहारादिकरणव्यापारविषयत्वमेव तत्फलविनाश-

---

(१) संवेदनस्य—पा० D पु० । (२) स्रावेण—पा C पु ।

ज्ञानं स्वकर्मणि किञ्चित् करोति क्रियात्वात् गमनक्रियावद् इत्यनुमानादेव ज्ञाततासिद्धिरिति चेत् । न कार्यत्वे सति विभुद्रव्यसमवायेन सिद्धगुणभावस्य ज्ञानस्य क्रियात्वासिद्धेः । क्रिया हि धात्वर्थमात्रं स्यादित्यभ्युपगमे ऽपि संयोगादिभिरनैकान्तिकत्वात् । तेषामपि किञ्चित्करत्वाभ्युपगमे ऽनवस्था स्यात् । तथाहुः ।

अनैकान्त्यादसिद्धेर्वा न च लिङ्गमिह क्रिया ।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥ इति ।

नक्रियाकर्मत्वं न तु तज्जन्यफलाश्रयत्वम् । एवमिन्द्रियलिङ्गादिज्ञानकरणव्यापारविषयत्वमेव तत्फलज्ञानकर्मत्वमित्यर्थः । माभूत् प्रत्यक्षं लिङ्गं तु भविष्यतीति शङ्कते । ज्ञानमिति । ग्रामादिप्राप्तिर्गमनफलमिति न दृष्टान्ते साध्यवैकल्यम् । किमिदं क्रियात्वं स्पन्दनत्वं धात्वर्थत्वं वा । आद्ये स्वरूपासिद्धिरित्याह । नेति । अक्रियात्वे हेतुमाह । सिद्धगुणभावस्येति । ज्ञानं न क्रिया गुणत्वाद् रूपवदित्यर्थः । गुणत्वे हेतुमाह । कार्यत्वे सतीति । एतेन सत्तादिव्युदासः । शेषं कर्मघटादिव्युदासार्थम् । ज्ञानं गुणः विभुद्रव्यसमवेतकार्यत्वात् सुखवदित्यर्थः । द्वितीये व्यभिचार इत्याह । क्रियेति । अत्रोदयनसम्मतिमाह[1] ।

अनैकान्त्यादित्यादि । इह ज्ञाततायां क्रियात्वं न लिङ्गं कुतः क्रियाशब्दस्य धात्वर्थपरत्वे संयोगादिष्वनैकान्त्यात् स्पन्दपरत्वे त्वसिद्धेरिति । वाशब्दो व्यवस्थितविकल्पार्थः । तर्हि ज्ञातो घट इति विषयविशेषणतया स्फुर-

(१) संवादमाह—पा० F पु० ।

ज्ञाततानुमेयस्य ज्ञानस्य कथं तदभावे सिद्धिरिति चेत् । न क्षणिकात्मविशेषगुणत्वेन तस्य सुखदुःखादिवन्मानसप्रत्यक्षतासिद्धेः । तर्हि तद्वदेवाबुभुत्सितग्राह्यत्वेन विषयान्तरसञ्चारो न स्यादिति चेत् । न निश्वासप्रश्वासहेतुभूतप्रयत्नेनानैका-

---

णात् प्रत्यक्षैव ज्ञाततेत्याशङ्क्याह । तद्वैशिष्ट्येति । ज्ञानविशिष्टत्वेनैवार्थस्य प्रकाशमानत्वादधिके ज्ञाततारूपाधिकार्थे प्रत्यक्षानुभवोऽपि न प्रमाणमित्यर्थः ।

ननु माभूदध्यक्षमनुमानं वा तथापि ज्ञानसिद्ध्यन्यथानुपपत्तिरूपयार्थापत्त्या ज्ञाततासिद्धिरिति शङ्कते । ज्ञाततेति । ज्ञातता क्रियाजन्या फलत्वात् ग्रामप्राप्तिवत् सैव क्रिया ज्ञानमिति ज्ञानसिद्धिः । अन्यथा तदेकसाध्यस्य तदभावे कथं सिद्धिरित्यर्थः । अर्थापत्तिमन्यथोपपत्त्या दूषयति । नेति । ज्ञानं मानसप्रत्यक्षं क्षणिकात्मविशेषगुणत्वात् सुखादिवदिति प्रत्यक्षत्वसिद्धावप्यनुमेयत्वे सुखादेरपि तथात्वप्रसङ्ग इत्यर्थः । क्षणिकात्मविशेषपदैस्त्रिभिः क्रमाद्धर्मादेः शब्दस्यात्मगतद्वित्वादेश्च व्युदासः । गुणग्रहणं स्फुटार्थम् । गुणव्यतिरेकेण क्षणिकविशेषाणामात्मन्यभावात् सामान्यविशेषान्त्यविशेषयोश्च क्षणिकपदेनैव निवृत्तेः । उक्तानुमानस्य प्रतिकूलतर्कपराहतिमाशङ्कते । तर्हीति । तद्वदेवेति । तेनैव हेतुना सुखादिवदेवेत्यर्थः । यदि ज्ञानमुक्तहेतुना सुखादिवन्मानसप्रत्यक्षं स्यात् तर्हि तद्वदेवाबुभुत्सितग्राह्यमपि स्यात् । तथा च ज्ञानैकनियतसत्ताकत्वात् पूर्वपूर्वज्ञानग्राहकोत्तरोत्तरज्ञानसन्तानाविच्छेदे विषयान्तरोपलब्धिर्न स्यादित्यर्थः । नैष दोषः । जीवनपूर्वकप्रयत्ने हेतोर्व्यभिचारादिति परिहरति । नेति । तस्या-

न्तिकत्वात् । तस्याप्यबुभुत्सितग्राह्यत्वेन विषया-
न्तरसञ्चारानभ्युपगमे सुषुप्तिमरणमूर्च्छाविषयान्तर-
सञ्चारा न स्युरिति दुस्तरं व्यसनमिति कृतं प्रसक्त्या-
नुप्रसक्त्येति ॥ ४ ॥ ५ ॥ ऽऽ ॥

पि पक्षकोटिनिविष्टत्वे ऽनिष्टमाह । तस्येति । जीवनपूर्वक-
प्रयत्नस्याबुभुत्सितग्राह्यत्वे सुषुप्तावपि तत्सद्भावात् तज्ज्ञा-
नानुवृत्तौ सुषुप्तिरेव न स्यात् एवमन्तिमादिश्वासहेतुप्रय-
त्नज्ञानेन मरणमूर्च्छनयोर्निवृत्तिः स्यात् यावज्जीवं सतः
प्रयत्नसन्तानस्यैवाजस्रोपलम्भाद् विषयान्तरोपलम्भस्या-
प्यनवकाश एवेत्यर्थः । दुष्परिहारश्चायमनिष्टप्रसङ्ग इति
सोपहासमाह । दुस्तरमिति । ननु माभूद् ज्ञानमबुभुत्सि-
तग्राह्यं तथापि कथं प्रत्यक्षं न तावत् केवलनिर्विकल्पकवेद्यं
विकल्पाभावे तदेकोऽन्येयनिर्विकल्पकसद्भावे प्रमाणाभा-
वात् न च केवलविकल्पवेद्यं निर्विकल्पकं विना तदनुत्पत्तेः
नापि तत्पूर्वकविकल्पवेद्यं पूर्वं निर्विकल्पकगृहीतस्य तस्य
तेनैव ग्रस्यमानस्याविकल्पमनवस्थानादित्याशङ्क्यान्त्यपक्ष
एव सिद्धान्तः तत्र निर्विकल्पकगृहीतज्ञानव्यक्तिनाशे ऽपि
तन्निष्ठज्ञानत्वसामान्यविशिष्टतया तद्ग्राहकनिर्विकल्पक-
सहकृतेन मनसा तत्समानविषयं व्यक्त्यन्तरं प्रथमत एव
विकल्प्यत इत्यादि सर्वमुदयनादिग्रन्थेषु क्षुण्णमेवेत्यलं
प्रासङ्गिकप्रमेयोपन्यासव्यसनेनेत्याह । इति कृतमिति ।
अयमितिशब्दः प्रकारवचनः । प्रमेयव्याप्यमित्यादि-
सङ्ग्रहोक्तं लक्षणद्वयमेकदेशिमतत्वादनतिप्रसिद्धत्वाद-
नतिभेदाच्चोपेक्ष्य प्रमाणसामान्यलक्षणप्रकरणं समाप-
यति । इतीति ॥ ४ ॥ ५ ॥ ऽऽ ॥

**एवं प्रमाणसामान्यं लक्षयित्वा तद्विशेषान् लक्षयिष्यन् विभागेनोद्दिशति ।**

**प्रत्यक्षमनुमानं स्यादुपमानं[1] तथागमः ॥ ६ ॥**
**प्रमाणं प्रविभज्यैवमक्षपादेन लक्षितम् ।**

**एतानीयन्त्येव प्रमाणानि नान्यानि नाधिकानि न न्यूनानि चेति । न्यूनाधिकसङ्ख्यासङ्ख्यान्तरव्यवच्छेदो विभागोद्देशस्य प्रयोजनम् । वादिप्रसिद्धितारतम्यमनादृत्य सौत्रक्रमानुरोधेनोद्दिष्टानीति[2] । तदुक्तम् । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति ॥ ६ ॥ ८८ ॥**

---

ननु सामान्यलक्षणानन्तरं विशेषलक्षणप्रस्तावादकाण्डे प्रत्यक्षादिपरिसंख्यानमुत्तरश्लोके न सङ्गच्छत इत्याशङ्क्य सङ्गमयन्नवतारयति । एवमिति । अनुद्दिष्टस्य लक्षणायोगादिदानीं विशेषोद्देशः सङ्गच्छत एवेत्यर्थः ।

अक्षपादग्रहणं मतान्तरेषु नैवमिति सूचनार्थम् तदुद्देशस्य प्रयोजनं वाच्यमित्यपेक्षायामाह ।

एतानीति । परिगणितान्येवेत्यर्थः । इयन्त्येवेति । चत्वार्येवेत्यर्थः । उभयत्र क्रमाद् व्यावर्त्यमाह । नेत्यादि । ननु वह्वादृताच्छब्दादुपमानस्य प्रथमोद्देशे को हेतुरत आह । वादीति । तारतम्यं क्रमः । किं तत् सूत्रं तदाह । प्रत्यक्षेत्यादि । ननु सूत्रे ऽप्येवमुद्देशे को हेतुरिति चेत् । उच्यते । तत्र सर्वप्रमाणोपजीव्यत्वात् प्रत्यक्षस्य प्राथम्यं तदितरप्रमाणोपजीव्यत्वसाम्यात् प्रत्यक्षानन्तर्यमनुमानस्य पृथक् प्रामाण्यदार्ढ्यसूचनार्थमुपमानस्य शब्दात् प्राथम्यं परिशेषाच्छब्दस्यान्ते निवेश इति ॥ ६ ॥ ८८ ॥

---

(१) प्रत्यक्षमनुमानाख्यमुपमानं—पा॰ A D पु॰ ।

(२) उद्दिष्टवानिति—पा॰ B पु॰ ।

अक्षपादग्रहणेन सूचितं मतान्तरेषु न्यूनाधिकसङ्ख्याकप्रमाणाङ्गीकारं विवृणोति ।

**प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः ॥ ७ ॥**
**अनुमानं च तच्चाथ साङ्ख्याः शब्दं च ते अपि ।**
**न्यायैकदेशिनोऽप्येवमुपमानं च केचन ॥ ८ ॥**
**अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ।**
**अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ॥९॥**
**सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः ।**

अर्थापत्त्यादीनामनुमानादावन्तर्भावं(१) वक्ष्याम इति उद्देशक्रमानुरोधेन प्रत्यक्षं लक्षयति ।

---

नन्वग्रिमश्लोकेषु मतान्तरोपन्यासस्य कः प्रसङ्ग इत्याशङ्क्याक्षपादपदेनाकाङ्क्षोत्थापनादित्याह । अक्षपादेति ।

न्यायैकदेशिनो भूषणीयाः केचन न्यायैकदेशिनः स्वयमित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ ऽऽ ॥

नन्वर्थापत्त्यादीनामप्रामाण्यमन्तर्भावो वा वक्तव्यः अन्यथा चतुष्ट्वानिर्वाहात् तदिदानीमपरोक्षेत्यादिना विशेषलक्षणोक्तिरयुक्तेत्याशङ्क्याह । अर्थापत्त्यादीनामिति । प्रमाकरणत्वान्नाप्रामाण्यं तावदेषामन्तर्भावस्तु तल्लक्षणयोगनिबन्धनस्तज्ज्ञानापेक्ष इति विशेषलक्षणानन्तरभावी न तत्प्रवृत्तिं प्रतिबध्नातीत्यर्थः । इतीति मत्वेति शेषः । तत्र प्रत्यक्षलक्षणस्य प्राथम्ये हेतुमाह । उद्देशेति । उद्देशे तु सर्वप्रमाणोपजीव्यत्वं हेतुरित्युक्तम् ।

---

(१) अनुमानाद्यन्तर्भावं—पा० पु० ।

**अपरोक्षप्रमाव्याप्तं प्रत्यक्षम् ।**

अपरोक्षत्वं[1] साक्षात्त्वम् तच्च लैङ्गिकादिज्ञान-व्यावृत्त ऐन्द्रियकज्ञानानुगतः कश्चिद् ज्ञानत्वावान्तर-जातिभेद इत्यग्रे दर्शयिष्यति[2] । अपरोक्षप्रमाव्याप्तं

---

अपरोक्षेत्यनेन लैङ्गिकादिव्युदासः । गतमन्यत् । अत्राविघ्नमब्राह्मण इतिवन्नञस्तदभावतदन्यवृत्तित्वे प्रमा-सामानाधिकरण्यायोगादधर्मवत् तद्विरुद्धवृत्तित्वमित्या-शयेनाह । अपरोक्षत्वमिति । तच्च न भूतत्वादिवदौपाधिकं सामान्यं किं तु मुख्यमेवेत्याह । तच्चेति । अत्राद्यविशेषणेन ज्ञानत्वानुभवत्वादेर्व्युदासः । द्वितीयेन स्मृतित्वस्य । तत्रापि तद्वृत्तिरित्युक्ते चाक्षुषत्वादिधर्मेष्वतिव्याप्तिः स्या-दत उक्तम् अनुगत इति । तद्व्यावृत्तत्वानधिकरणमित्यर्थः । जातिग्रहणाद् व्यञ्जकधर्मस्यैन्द्रियकत्वस्य निवृत्तिः । ज्ञान-त्वावान्तरेति स्फुटार्थम् । सत्तागुणत्वयोश्च प्रथमविशेषणे-नैव पलायनात् । एतच्च लौकिकप्रत्यक्षाभिप्रायमीश्वरज्ञा-नाव्याप्तेः तेन लैङ्गिकादिव्यावृत्तमिन्द्रियजन्याजन्यज्ञान-व्यावृत्तत्वानधिकरणसामान्यं साक्षात्त्वमिति योज्यम् । अजन्यज्ञानमीश्वरस्येति न तत्राव्याप्तिः । अग्र इति । प्रमेये-ष्वक्षलक्षणप्रसङ्गादिन्द्रियं तच्च साक्षात्त्वं जातिभेद इति स्थितिरिति[3] वक्ष्यतीत्यर्थः । प्रसिद्ध्यनुरोधेन प्रमाकरण-

---

(१) आपरोक्ष्यं—पा॰ B पु॰ ।
(२) निवेदयिष्यति—पा॰ B पु॰ ।
(३) शरीरयोगे सत्येव साक्षात्प्रमितिसाधनम् ।
इन्द्रियं तच्च साक्षात्त्वं जाति भेद इति स्थितिः ॥
इति E पुस्तके टिप्पण्याम् ।

प्रत्यक्षमिति वचनमीश्वरस्यापि यथा प्रत्यक्षता स्या-
दिति । यथाहुः ।

तन्मे प्रमाणं शिव इति ।

---

मिति वक्तव्ये प्रमाव्याप्तमित्युक्तेः प्रयोजनमाह । अप-
रोक्षेति । अलौकिकप्रत्यक्षस्यापि संग्रहार्थमित्यर्थः ।

न चेदमीश्वरप्रामाण्यमसाम्प्रदायिकं न्यायाचार्यै-
स्तथासमर्थनादित्याह । यथाहुरिति । न्यायकुसुमाञ्जला-
वीश्वरप्रामाण्यसाधनं चतुर्थस्तबकार्थः । तत्रेश्वरस्य कथं
प्रामाण्यं कुत्र वा प्रमाणे ऽन्तर्भाव इत्यपेक्षायामुक्तार्थ-
स्यायमुपसंहारश्लोकः(१) ।

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्तारिवस्तुक्रमः ।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥ इति ।

अनुभवं तावत् त्रिभिर्विशिनष्टि । साक्षात्कारिणि
साक्षात्कारिधर्मिण्यपरोक्ष इत्यर्थः । नित्ययोगिनि ईश्व-
रेण नित्यसम्बद्ध इत्यर्थः । एतेनेश्वरस्य प्रमाव्याप्तत्वात्
प्रामाण्यम् । तत्रापि साक्षात्कारिप्रमायोगात् प्रत्यक्षत्वं
चोक्तम् । परद्वारानपेक्षस्थितौ कारणान्तरनिरपेक्षसत्ताके
नित्यसिद्ध इति यावत् । एतेनेश्वरानुभवस्य कारणासंस्प-
र्शित्वेन पूर्वोक्तनित्ययोगित्वमस्मृतिरूपत्वं कारणदोषा-
नवकाशाद् वक्ष्यमाणभूतार्थत्वं सङ्कोचे कारणाभावात्
सर्वविषयत्वं च सिद्धम् । भूतार्थो यथार्थः तस्मिन्ननुभवे
निविष्टो विषयतया स्थितो निखिलप्रस्तारिणः सार्वत्रिकस्य

---

(१) मुक्तार्थन्यायोपसंहारश्लोकः—पा॰ F पु॰ ।

अन्यथा लौकिकप्रत्यक्षमात्रविवक्षायामिन्द्रिय-जन्यप्रमासाधकतमं प्रत्यक्षमित्यलक्षयिष्यदिति ।

तद्विभागमाह ।

द्विविधं च तत् ॥ १० ॥

ते एव द्वे विधे विभज्य दर्शयति ।

सविकल्पकमित्येकमपरं निर्विकल्पकम् ।

तयोर्लक्षणमाह ।

---

वस्तुनो जगज्जालस्य क्रमो विशेषो यस्य स तथोक्तः नित्य-सर्वज्ञ इति यावत् । लेशस्याप्यल्पस्याप्यदृष्टिनिमित्तस्या-ज्ञातकरणस्य दुष्टेर्दोषस्य विगमादभावात् प्रभ्रष्टो निवृत्तः शङ्कातुषोऽनाप्तत्वशङ्कालेशो यस्य स परमाप्त इति यावत् । शिवः सर्वात्मनां दुःखोच्छेदकरः परमात्मा मे मम नैयायि-कस्य तत् प्रत्यक्षाख्यं प्रमाणं कारणाधीनज्ञानतया भ्रान्त्या-दिशङ्कोत्थानकलङ्किभिरपरैर्योगिभिः किं न किञ्चित् साध्यमस्तीत्यर्थः ।

नन्विदं लक्षणं लौकिकप्रत्यक्षाभिप्रायमेव किं न स्यादित्यत्राह । अन्यथेति ।

द्विविधं च तदितिश्लोकशेषेण एतल्लौकिकालौकिक-रूपं द्वैविध्यमेवानूद्यते प्रागुक्तलक्षणविशेषतयेत्याशङ्क्य नेत्याह । तद्विभागमिति ॥ १० ॥

सविकल्पकमित्यादिना द्वैविध्यान्तरोक्तिशङ्काया-माह(१) । ते एवेति ।

---

(१) द्वैविध्यान्तरशङ्कायामाह–पा E पु० ।

**नामादिभिर्विशिष्टार्थविषयं सविकल्पकम् ॥ ११ ॥**
**अविशिष्टार्थविषयं प्रत्यक्षं निर्विकल्पकम्(१) ।**

नामजातिद्रव्यगुणक्रियाभिर्विशिष्टमर्थं विषयीकुर्वत् सविकल्पकं प्रत्यक्षम् । यथा देवदत्तोऽयं ब्राह्मणः शुक्लो दण्डी गच्छतीत्यादि । नामादिविशेषणवैधुर्येण स्वलक्षणमात्रविषयं निर्विकल्पकम् । यथाहुः ।

अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्ध(२)वस्तुजम् ॥ इति ।

निर्विकल्पकमेव प्रत्यक्षमास्थिषत सौगताः ।
यथाहुः । कल्पनापोढमभ्रान्तं प्रत्यक्षमिति । तदसत् ।

---

हानादिव्यवहारहेतुत्वात् सविकल्पकस्य प्राथम्यं तदुन्नेयत्वादन्यस्य तदानन्तर्यम् । उद्दिष्टयोः पुनरुद्देशः पुनरुक्तिरत आह । तयोरिति ।

आदिशब्दार्थं दर्शयन्नाद्यं विवृणोति । नामजातीति । उदाहरति । यथेति । द्वितीयं विवृणोति । नामादीति ।

अत्र भट्टपादसम्मतिमाह । यथाहुरिति ।

आलोचनज्ञानं व्यवहारानङ्गमाकलनमात्रमित्यर्थः । आदिशब्दाज्जडमुमूर्ष्वादिसंग्रहः । शुद्धवस्तुजं विशेषणविशेष्यभावानुल्लेखीत्यर्थः ।

अथ सविकल्पकस्य प्रामाण्यपरीक्षार्थं परेषां विप्रतिपत्तिं तावदुपन्यस्यति । निर्विकल्पकमेवेति । आस्थिषत प्रतिज्ञातवन्त इत्यर्थः । आङः स्थः प्रतिज्ञायामित्या-

---

(१) प्रत्यक्षमितरद्भवेत्—पा॰ A पु॰ । (२) मुग्धेति क्वचित् ।

ग्राह्यांशे कल्पनानां भ्रान्तत्वेनाभ्रान्तपदेनैव[१] व्यावृत्तिसिद्धेः कल्पनापोढविशेषणवैयर्थ्यात् । किं च[२] विवादाध्यासितो विकल्पः स्वगोचरे प्रत्यक्षं प्रमाणत्वे सत्यपरोक्षावभासित्वात् निर्विकल्पकवत् । न चात्र विशेषणासिद्धिः । यतः साधितमधस्ताद् विकल्पानां प्रामाण्यम् । शाब्दिकास्तु सविकल्पकमेव प्रत्यक्षमाहुः । यथाहुः ।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते ॥ इति ।

---

त्मनेपदम् । कल्पनापोढं नामजात्यादियोजनारहितम् । दूषयति । तदसदिति । बाह्यांशे ज्ञानस्यैव नीलाद्याकार इत्यर्थः । सविकल्पकप्रामाण्ये प्रमाणमप्यस्तीत्याह । किं चेति । प्रत्यक्षं प्रत्यक्षप्रमाणमित्यर्थः । अन्यथा प्रत्यक्षाभासेनार्थान्तरता स्यात् । प्रमाणत्वे सतीति अविसंवादित्वे सतीत्यर्थः । अन्यथा साध्यावैशिष्ट्यात् । एतेन प्रत्यक्षाभासव्युदासः । शेषं लैङ्गिकादिनिरासार्थम् । अधस्तात् सौगतोक्तप्रमाणसामान्यलक्षणनिरासावसर इत्यर्थः । प्रामाण्यमविसंवादित्वमित्यर्थः । निर्विकल्पकं च परीक्षितुं तत्रापि विप्रतिपत्तिमुपन्यस्यति । शाब्दिकास्त्विति । सविकल्पकस्यैव प्रत्यक्षत्वे तदुक्तामेव युक्तिं लिखति ।

न सोऽस्तीति । शब्देनानुविद्धमित्यन्वयः । घटः पट इति शब्दविशिष्टविषयघटितमेव सर्वं विज्ञानं गृह्यतेऽनु-

---

(१) अभ्रान्तपदोपादानेन–पा॰ D पु॰ ।
(२) किं तु–पा॰ D पु॰ ।

तदपि न । अगृहीतसम्बन्धानां शब्दानुल्लेखिनः प्रत्ययस्योत्पत्तेः । इतरेषां चेन्द्रियसंयोगानन्तरमविशिष्टविषयापरोक्षानुभवस्य[१] दुरपह्नवत्वात्[२] । अन्यथा विकल्पस्यैवानुदयप्रसङ्गात् वाच्यदर्शनेन हि प्रतिसम्बन्धिवाचकस्मृतिरस्ति । यथाहुः ॥

यत् सञ्ज्ञास्मरणं तत्र न तदप्यन्यहेतुकम् ।
पिण्ड एव हि दृष्टः सन् सञ्ज्ञां स्मारयितुं क्षमः ॥ इति ।

पिण्डदर्शनस्य चेन्द्रियसन्निकर्षव्यतिरेकेण न

---

व्यवसीयते ऽतः सर्वं प्रत्यक्षं सविकल्पकं विशिष्टार्थग्राहित्वाल्लैङ्गिकवदिति भावः ।

नैतद्युक्तमव्युत्पन्नप्रत्यक्षेषु हेतोर्बाधादित्याह । तदपि नेति । व्युत्पन्नप्रत्यक्षेष्वपि क्वचिद्बाध इत्याह । इतरेषां चेति । अनुभवसिद्धस्यापि तस्यापह्नवे ऽनिष्टमाह । अन्यथेति । कुत इत्याशङ्क्य तस्यैव तत्कारणवाचकस्मृतिबीजो[३]-द्बोधकत्वादित्याह । वाच्येति ।

उक्तमर्थं वृद्धसंवादेन स्पष्टीकरोति । यथाहुरिति । तत्र सञ्ज्ञिविकल्पे कारणमिति शेषः । दृष्टः सन्नालोचितः सन्नित्यर्थः । सञ्ज्ञिनिर्विकल्पकमेव साहचर्यात् संस्कारोद्बोधद्वारा प्रतियोगिसञ्ज्ञास्मृतिहेतुरित्यर्थः ।

तर्हि पिण्डज्ञानं प्रमाणान्तरकार्यत्वात्[४] न प्रत्यक्षमित्याशङ्क्येन्द्रियान्वयव्यतिरेकानुविधानादिन्द्रियकार्यमे-

---

(१) परोक्षावभासस्य-पा॰ B. D. पु॰ ।
(२) अपनेतुमशक्यत्वादित्यर्थः ।
(३) स्मृतिबीजं संस्कारः ।
(४) इन्द्रियकार्यत्वात् ।

कारणान्तरमुपलभ्यते[1] तस्मात् तदुभयमपि प्रत्यक्षमिति नैयायिकाः । यदसूत्रयदिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति। तत्र हि अव्यपदेश्यं व्यवसायात्मकमिति च निर्विकल्पकसविकल्पकयोर्ग्रहणम् । व्यपदिश्यते व्यवच्छिद्यते ऽनेनेति व्यपदेशो विशेषणमुपलक्षणं वा नामजात्यादि तत्कर्म व्यपदेश्यं व्यवच्छेद्यमिति यावत् । अत्र सदसद्वा समानाधिकरणं व्यवच्छेदकं विशेषणं व्यधिकरणं तूपलक्षणम् । यथा दण्डी देवदत्तो

---

वेत्याह । पिण्डेति । उपसंहरति । तस्मादिति । नैयायिका न्यायविदः स्वयमित्यर्थः । अन्ये तु न्याये ऽनभिज्ञा इति भावः । उभयं प्रत्यक्षमित्यत्र सूत्रकारसंवाद[2]माह । यदसूत्रयदिति । नन्वत्र सूत्रे तयोर्नामापि न श्रूयत इत्याशङ्क्याह । तत्रेति । कथमाभ्यामनयोरभिधानमित्याशङ्क्य तत्राद्यमाद्यपरत्वेन व्याख्यातुं व्यपदेश्यशब्दे तावद्यत्प्रत्ययान्ते प्रकृत्यर्थमाह । व्यपदिश्यत इति । अस्य निर्देशार्थत्वं वारयति । व्यवच्छिद्यत इति । प्रत्ययार्थमाह । तत्कर्मेति । तदर्हमित्यर्थः । अर्हार्थे यत्प्रत्ययः । विशेषणोपलक्षणयोर्भेदमाह । अत्रेति । सदसद्वेति । भावरूपमभावरूपं वेत्यर्थः । समानाधिकरणं समानविभक्तिकं व्यधिकरणं भिन्नविभक्तिकं क्रमेणोदाहरति । यथेति । अव्यपदे-

---

(१) लक्ष्यते—पा॰ B पु॰ ।

(२) सम्मति—पा॰ E पु॰ ।

जटाभिस्तापस इति । अविद्यमानं व्यपदेश्यं यस्मिन् तदव्यपदेश्यं जात्यादिस्वरूपमात्रावगाहि । न तु तेषां मिथो विशेषणविशेष्यभावावगाहीति यावत् । व्यवसायो विनिश्चयो विकल्प इति यावत् । स एवात्मा स्वरूपं यस्य तद्व्यवसायात्मकमिति ॥ ११ ॥ ऽऽ ॥

अथानुमानं लक्षयति ।

**व्याप्तिग्रहणसापेक्षं प्रमितेः साधनं विदुः ॥ १२ ॥**
**अनुमानमिति ।**

व्याप्तेर्वक्ष्यमाणलक्षणाया ग्रहणमपेक्ष्य प्रमितेः

---

श्यशब्देन नञो बहुव्रीहिसमासमाह । अविद्यमानमिति । फलितमाह । जात्यादीति । नन्वेतत्सविकल्पकेऽपि समानमत आह । न त्विति । अथ द्वितीयं द्वितीयपरत्वेन व्याचष्टे । व्यवसाय इति । आत्मशब्दस्येह चेतनपर्यायत्वेऽनन्वयादन्वययोग्यार्थमाह । आत्मा स्वरूपमिति । सूत्रेऽव्यभिचारिपदं प्रत्यक्षाभासव्युदासार्थम् । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमिति सामान्यलक्षणम् ॥ ११ ॥ ऽऽ ॥

उद्देशक्रमप्राप्तमनुमानलक्षणमवतारयति । अथेति । प्रथमविशेषणेन प्रत्यक्षादेः प्रमितिपदेनाभासानां साधनपदेन फलस्य च व्युदासः । अनुमीयतेऽनेनेत्यनुमानं करणे ल्युट् ।

तदेतद्विवृणोति । व्याप्तेरिति । केयं व्याप्तिरित्यत आह । वक्ष्यमाणेति । ननु प्रत्यक्षादेरपि विना प्रमेयादिक-(१)मप्रवृत्तेः प्रमेयादिव्याप्तिसापेक्षत्वादतिव्याप्तिरित्याश-

---

(१) प्रमेयमालोकादिकम् ।

साधनमनुमानम् । प्रत्यक्षादीनां तु प्रमेयव्याप्तिसद्भावे ऽपि तद्ग्रहणापेक्षा नास्तीति ग्रहणविशेषणेन तेषां निरासः । लिङ्गपरामर्शोऽनुमानमित्याचार्याः । तत्र लिङ्गलक्षणमुत्तरत्र भविष्यति । परामर्श इति च प्रतिसन्धानात्मकं तृतीयलिङ्गज्ञानमभिमतमिति ॥ १२ ॥

व्याप्तिलक्षणमाह ।

**व्याप्तिः सम्बन्धो निरुपाधिकः ।**

सोपाधिकसम्बन्धवतां मैत्रीतनयत्वादीनां व्याप्तिर्माभूदिति निरुपाधिक इत्युक्तम् । स्वाभाविकः सम्बन्धो व्याप्तिरिति यावत् ।

---

ऽऽह । प्रत्यक्षादीनामिति । प्रमेयादीत्यादिशब्देन सहकार्यादिसंग्रहः । तत्र (१) व्याप्तेः प्रायेण सत्तैवापेक्षिता न तु तज्ज्ञान(२)मित्यदोष इत्यर्थः । उदयनाचार्यैरपीदमेव लक्षणं भङ्ग्यन्तरेणोक्तमित्याह । लिङ्गेति । तस्यार्थं वर्णयन् लिङ्गलक्षणाकाङ्क्षायामाह । तत्रेति । उत्तरत्रेति हेतुलक्षणावसर इत्यर्थः । द्वितीयलिङ्गपरामर्शस्य कारणत्वं केचिदिच्छन्ति तन्निरासार्थमाह । परामर्श इति । किं तत् तृतीयलिङ्गज्ञानं तदाह । प्रतिसन्धानात्मकमिति । तथा चायं धूमवानिति व्याप्तस्य लिङ्गस्य पक्षधर्मतानुसन्धानं प्रतिसन्धानं तदात्मकमित्यर्थः ॥ १२ ॥

ननु श्लोकशेषेण प्रकृतानुपयुक्तं किमप्युच्यत इत्याशङ्क्य नेत्याह । व्याप्तिरिति ।

विशेषणफलमाह । सोपाधिकेति । निरुपाधिकशब्दार्थमाह । स्वाभाविक इति । अनन्यप्रयुक्त इत्यर्थः ।

---

(१) प्रत्यक्षादौ । (२) ज्ञाने—पा॰ D पु॰ ।

कोऽसावुपाधिर्नाम यद्विधुरः सम्बन्धो व्याप्ति-रित्यत्राह ।

साधनाव्यापकाः साध्यसमव्याप्ता उपाधयः[१] ॥ १३ ॥

यावत्साधनदेशमवर्तमानो यावत्साध्यदेशवृत्तिरुपाधिः । यथा वैधहिंसायां हिंसात्वेनाधर्मत्वे साध्ये निषिद्धत्वमुपाधिः । तद्धि साध्यमधर्मत्वं व्याप्नोति न व्याप्नोति च साधनाभिमतं हिंसात्वम् पक्ष एव वैधहिंसायां सत्यपि हिंसात्वे तस्याभावात् । साधनाव्यापक इत्येतावदुच्यमाने ऽनित्यत्वसाधने कृतकत्वे सावयवत्वमुपाधिः स्यात् । अमूर्ते क्रियादौ कृतकत्वे सत्यपि सावयवत्वाभावेन साधनाव्यापकत्वात् ततश्च साध्यव्यापक इत्युक्तम् । न हि सावय-

---

ननूत्तरश्लोके उपाधिलक्षणस्य का सङ्गतिरत आह । कोऽसाविति ।

लक्षणं विवृणोति । यावदित्यादि । यावान् साधनदेशो यावत्साधनदेशं यावदवधारण इत्यव्ययीभावः । तत्रावर्तमानः साधनाव्यापक इत्यर्थः । यावत्साध्यदेशं वृत्तिर्यस्येत्यव्ययपूर्वपदो बहुव्रीहिः समपदेन व्याप्यत्वेन व्यापकत्वेन च साध्यसम्बन्ध उक्तः । उदाहरति । यथेति । लक्ष्ये लक्षणं पातयति । तद्धीति । व्याप्नोति व्याप्यते चेति शेषः । लक्षणाक्षरव्यावर्त्यमाह । साधनाव्यापक इत्यादिना । तस्मात् प्रयोजनवदेव विशेषणद्वयोपादा-

(१) ह्युपाधयः-पा· A पु· ।

वत्वं साध्यमनित्यत्वं व्याप्नोति अनित्येष्वेव क्रियादिष्वभावात् । अथ साध्यव्यापक इत्येवाभिधीयेत ततश्चानित्यत्वसाधने सावयवत्वे कृतकत्वमुपाधिः स्यात् । तस्य साध्यानित्यत्वव्याप्तेः । साधनाव्यापक इत्युक्ते पुनस्तस्य सावयवत्वव्यापकत्वादनुपाधित्वं निरुपाधिकसाध्यसम्बन्धं चोभयम् । यथाहुः । कृतकत्वसावयवत्वादिप्रयुक्ता च विनाशितेति । तस्मात् प्रयोजनवदेव विशेषणद्वयोपादानम् । यथाहुः ।

एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः ।
साध्याभावाविनाभावी स उपाधिर्यदत्ययः ॥ इति ।

---

नमित्यन्तेन सन्दर्भेण । अनित्यत्वसाधने कृतकत्व इति । अनित्यः शब्दः कृतकत्वाद् घटवदित्यत्र साधनाव्यापकत्वाद् घटे सावयवत्वमुपाधिः स्यादित्यर्थः । अनित्यत्वसाधने सावयवत्व इति । क्षित्यादिकमनित्यं सावयवत्वाद् घटवदित्यत्र साध्यव्यापकत्वात् कृतकत्वमुपाधिः स्यादित्यर्थः । ननु कृतकत्वसावयवत्वयोरेकस्य सोपाधिकत्वमस्तु तथा च साधनाव्यापकत्वसाध्यव्यापकत्वयोरन्यतरेणैव लक्षणसिद्धौ लाघवादित्याशङ्क्याह । निरुपाधिकेति । अनित्यत्वसाधने द्वयोरपि दृष्टशक्तिकत्वान्नान्यतरपरित्यागो न्याय्य इति भावः । द्वयोरप्यनित्यतासाधकत्वे वृद्धसम्मतिमाह । यथाहुरिति । प्रकृतमुपसंहरति । तस्मादिति । समपदं तु पक्षेतरत्वनिरासार्थमिति शेषः ।

उपाधिलक्षणमुदयनवाचा संवादयति । एकसाध्ये-

अन्यत्राप्युक्तम् । कः पुनरुपाधिः । साध्यप्रयोजकं निमित्तान्तरमिति । किमस्य लक्षणम् । साधनाव्यापकत्वे सति साध्यव्यापकत्वमिति[१] । स्फटिकग-

---

ति । मिथः सम्बन्धशून्ययोरन्यत्र परस्परपरिहारवृत्त्योर्द्वयोर्हेत्वोः क्वचिदेकेन साध्येन सहाविनाभावे दृष्टे सति तत्र यदत्ययो यदभावः प्रकृतसाध्याभावेनाविनाभावी यन्निवृत्त्या साध्यं निवर्तेत इत्यर्थः । स उपाधिः स एव प्रयोजकः इतरस्त्वप्रयोजकः । यथा हिंसात्वनिषिद्धत्वयोः क्रतुहिंसायां कलञ्जभक्षणे च पृथग्वृत्त्योः क्रतुहिंसायामधर्मत्वे साध्ये तेन सह बाह्यहिंसायां द्वयो[२]रविनाभावे दृष्टेऽपि कदलीफलभक्षणादौ निषिद्धत्वनिवृत्त्या अधर्मत्वनिवृत्तिदर्शनान्निषिद्धत्वमुपाधिस्तद्वदित्यर्थः ।

अत्रापि साधनाव्यापकत्वे सति साध्यसमव्यापकत्वमेव भङ्ग्यन्तरेणोक्तं तदेतदात्मतत्त्वविवेकेऽप्युक्तमित्याह । अन्यत्रापीति । तद्ग्रन्थं लिखति । कः पुनरित्यादि । निमित्तान्तरं हेत्वन्तरमित्यर्थः । अयं किरणावलीग्रन्थ इति कैश्चिदुक्तं तदाकरदर्शनाशक्ति[३]विलसितमित्यपास्तम्[४] । तत् न्यायकुसुमाञ्जलौ त्वेतल्लक्षणोक्त्यनन्तरमुपाधिशब्दप्रवृत्तिनिमित्तं चोक्तम् । तद्धर्मभूता हि व्याप्तिर्जपाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीत्यसावुपाधिरुच्यत इति । तदर्थतो दर्शयति । स्फटिकेत्यादि ।

---

(१) साध्यसमव्याप्तिरुपाधिरिति—पा॰ C पु॰ ।

(२) हिंसात्वनिषिद्धत्वयोः ।

(३) तदपरिचयप्रदर्शनाशक्ति—पा॰ E पु॰ ।

(४) तदास्ताम्—पा॰ E पु॰ ।

तत्वेन रक्तताप्रतीतौ जपाकुसुमवत् साधनाभिमतगतत्वेन स्वधर्मभूताया व्याप्तेः प्रतिभासनिमित्तत्वेनास्योपाधित्वव्यपदेश इति ॥ १३ ॥

उपाधिद्वैविध्यमाह ।

**भवन्ति ते च द्विविधा निश्चिताः शङ्किता इति**[1]

निर्णीतोभयविशेषणवान् निश्चित उपाधिः । यथोदाहृतमेव निषिद्धत्वम् । उक्तयोर्विशेषणयोरन्यतरसदसद्भावशङ्कायां तु शङ्कित उपाधिः स्यात् । यथा मैत्रीगर्भत्वेन सप्तमगर्भस्य श्यामत्वे साध्ये शाकाद्याहारपरिणतिः । पक्षभूते हि सप्तमगर्भे श्यामत्वोपाधेः

---

उप समीपस्थे स्वधर्माधानादुपाधिरुच्यत इत्यर्थः ॥ १३ ॥

ननु सम्प्रति प्रकृतानुमानविभागप्रस्तावादुत्तरश्लोके बहुवचननिर्देशः कथमत आह । उपाधीति ।

शङ्किताः सन्दिग्धा इत्यर्थः ।

तत्र निश्चितोपाधेर्लक्षणमुदाहरणं चाह । निर्णीतेति । शङ्कितोपाधेरप्याह । उक्तयोरिति । साधनाव्यापकत्वसाध्यव्यापकत्वयोरित्यर्थः । गर्भस्य श्यामत्व इत्यनेन प्राणिश्यामत्व एवायमुपाधिर्न सर्वत्रेति सूचितम् । तेनेन्द्रनीलादिश्यामत्वे साध्यव्याप्तिभङ्ग इति चोद्यं गर्भश्रावेण गलितम् । अस्य शङ्कितोपाधित्वं कथमत आह । पक्षभूते हीति । ननु साधनाव्यापकत्वं सन्दिग्धं चेत् तस्या-

---

(१) अपि—पा॰ A पु॰ ।

शाकाद्याहारपरिणामस्याभावानिश्चयात् साधनाव्यापकत्वं सन्दिग्धमिति भवति शङ्कितोपाधित्वम्। साधनाव्यापक इत्यनिश्चितपक्षवृत्तित्वस्य विवक्षितत्वात् न लक्षणासंग्रहः। तदेतदुभयविधोपाधिविधुरः सम्बन्धो व्याप्तिरिति।

अनुमानस्यावान्तरभेदमाह।

**अनुमानं त्रिधा भिन्नम्।**

अवान्तरभेदानामानन्त्येऽपि राशित्रयेणैव क्रोडीचकार इत्यर्थः। ता एव विधा विभजते।

---

त्सममत्वाल्लक्षणमसम्भवि स्यादित्याशङ्क्याह। साधनाव्यापक इति। अनिश्चितपक्षवृत्तित्वस्येति। निश्चितपक्षवृत्तित्वाभावस्येत्यर्थः। निश्चितपक्षवृत्तिरहितत्वस्येति पाठे निश्चितायाः पक्षवृत्ते राहित्यमभावस्तस्येत्यर्थः। उभयथापि पक्षवृत्तिनिश्चयाभावस्य लक्षणत्वात् तस्य च पक्षवृत्तित्वाभावनिश्चये तत्सन्देहे च सम्भवान्नासम्भवदोष(१) इत्यर्थः। प्रकृतव्याप्तिलक्षणमुपसंहरति। तदेतदिति।

ननु लक्षितमनुमानमथोपमाने लक्षयितव्ये किमर्थं पुनरनुमानोत्कीर्तनमुत्तरश्लोक इत्याशङ्क्य तद्विभागार्थमित्याह। अनुमानस्येति।

ननु स्वार्थाद्यनेकभेदसम्भवे कथं त्रैविध्यमत आह। अवान्तरेति। अथान्वयीत्यादिना पुनस्त्रैविध्यान्तरमुच्यत इति भ्रमं निरस्यति। ता एवेति। अत्रोभयव्याप्तिकादन्व-

---

(१) नासम्भवाद्दोष—पा॰ E पु॰।

**अन्वयि व्यतिरेकि च ॥ १४ ॥**

**अन्वयव्यतिरेकीति ।**

तदुक्तम् । तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टं चेति । तत्र तदिति व्याप्तिज्ञानं (पक्षधर्मताज्ञानं) लिङ्गदर्शनं च परामृश्यते । ते पूर्वे यस्य लिङ्गप्रतिसन्धानस्य[1] तत् तत्पूर्वकं ततश्च तत्पूर्वकमित्येतावता सामान्यलक्षणमुच्यते । शेषेण सामान्यतो विशेषतश्च विभागोद्देश इति ।

---

व्यतिरेकिणः पूर्वमेकैकव्याप्तिकयोरितरयोरुद्देशः तत्रापि व्यतिरेकस्यान्वयपूर्वकत्वादन्वयिनः प्राथम्ये ऽर्थाद्व्यतिरेकिणो माध्यस्थ्यमिति क्रमः ।

अत्र सूत्रसंवाद[2]माह । तदुक्तमिति । सूत्रार्थमाह । तत्रेति । तच्छब्दस्य बुद्धिस्थार्थविशेषपरत्वमाह । तदितीति । लिङ्गदर्शनं द्वितीयलिङ्गज्ञानमित्यर्थः । लिङ्गप्रतिसन्धानस्येति । तृतीयलिङ्गपरामर्शस्येत्यर्थः । तथा च तत्पूर्वकशब्देन लिङ्गपरामर्शोऽनुमानमिति सामान्यलक्षणमुक्तमित्याह । ततश्चेति । शेषेणेति । त्रिविधमिति सामान्यतो विभागः पूर्ववदित्यादि विशेषतः । व्यतिरेकापेक्षया पूर्वभावित्वात् पूर्वशब्देनान्वय उच्यते तद्वदन्वयीत्यर्थः । शेषशब्देन पश्चाद्भावित्वाद्व्यतिरेकस्तद्वद्व्यतिरेकीत्यर्थः । सामान्यतः कैवल्यपरिहारेणोभयविशिष्टतया दृष्टत्वात् सामान्यतो दृष्टमित्यन्वयव्यतिरेक्युच्यते । केचित् तु पूर्वव-

---

(१) परामर्शस्य—पा॰ D पु॰ ।

(२) सूत्रसम्मति—पा॰ E पु॰ ।

तेषां त्रयाणां विशेषलक्षणाभिधानं प्रतिजानाति तावत् ।

तेषां लक्षणमुच्यते ।

तत्र केवलान्वयिनो लक्षणमाह ।

**सर्वेषु केषुचिद्वापि सपक्षेषु समन्वयि[1] ॥ १५ ॥**
**विपक्षशून्यं पक्षस्य व्यापकं केवलान्वयि ॥**

वक्ष्यमाणलक्षणाः पक्षादयः । तत्र पक्षीकृतेषु सर्वेषु व्याप्त्या वर्तमानं सर्वेषु सपक्षेषु कतिपयेषु वा वर्तमानमविद्यमानविपक्षं केवलान्वयि । यथा सर्वा-

---

दिति कारणलिङ्गकं शेषवदिति कार्यलिङ्गकं ततोऽन्यत् सामान्यतो दृष्टमिति व्याचक्षते तत्प्रकृतविसंवादाच्चिन्त्यम् ।

ननु तेषां लक्षणमुच्यत इति प्रतिज्ञा न युज्यते व्याप्तिग्रहणसापेक्षमित्यत्रैवोक्तत्वादित्याशङ्क्य सत्यं सामान्यलक्षणमुक्तं विशेषलक्षणं तु प्रतिज्ञायत इत्याह । तेषां त्रयाणामिति । प्रतिजानातीति परस्मैपदं चिन्त्यम् । सम्प्रतिभ्यामनाध्यान इत्यात्मनेपदस्मरणात् ।

तच्चोद्देशक्रमादेवोच्यत इत्याशयेनाह । तत्रेति । अत्र विपक्षशून्यमित्यनेनास्य इतराभ्यां भेद उक्तः ।

पक्षादीनां किं लक्षणमत आह । वक्ष्यमाणेति । यत् प्रथमार्द्धे सपक्षेषु कृत्स्नैकदेशवृत्तिभेदाद्धेतोर्द्वैविध्यमुक्तं तत् क्रमेणोदाहरति । यथेत्यादि । हेतोरसाधारण्य-

---

(१) क्षतान्वयम्–पा॰ A पु॰ ।

